तत्पदशक्यः' इति वा 'तत्पदं बुद्धिविषयतावच्छेदकरूपावच्छिन्नबोधकं भवतु' इति वा शक्तिज्ञानस्याकारः स्वीक्रियते। अत्र बुद्धिविषयः घटादिः, बुद्धिविषयतावच्छेदकं घटत्वादिकं, बुद्धिविषयतावच्छेदकत्वं घटत्वादिषु सर्वेषु धर्मेषु वर्तते इति बुद्धिविषयतावच्छेदकत्वेन रूपेण अनुगताः ये सर्वे धर्माः तद्विशिष्टे तदादिपदानां शक्तिः। एवं च यद्यपि शक्यतावच्छेदकं घटत्व-पटत्वादिकं भिन्नमेव। तथापि सर्वेषां शक्यतावच्छेदकानां बुद्धिविषयतावच्छेदकत्वेन रूपेण अनुगमात् अनुगतधर्मावच्छिन्ने शक्तिस्वीकारेण एकार्थकत्वम्। यथा घटत्वाद्यनुगतधर्मावच्छिन्ने शक्तिस्वीकारात् घटादिपदानामेकार्थकत्वं तद्वदेव। हर्यादिपदानां तु शक्यतावच्छेदकानि अनुगतानि न इति कृत्वा तेषां शब्दानां नानार्थकत्वम्।

एवंरीत्या बुद्धिविषयतावच्छेदकधर्मविशिष्टे शक्तिस्वीकारेऽपि बुद्धिविषयतावच्छेदकत्वं तु शाब्दबोधे न भासते।

यतः बुद्धिविषयतावच्छेदकत्वम् उपलक्षणतया एव शक्तिग्रहे विषयः न तु तादृशघटत्वादौ विशेषणतया, न वा शाब्दबोधविषयतया शक्तिग्रहविषयः। घटत्व-पटत्वादौ तु 'घटपदजन्यबोधविषयः घटत्वं भवतु' इति शाब्दबोधविषयतया शक्तिग्रहविषयत्वं वर्तते इति घटत्वादीनि घटपदजन्यशाब्दबोधे विषयाः, तस्मादेव घटत्वादीनि विशेषणानि इत्युच्यन्ते। परन्तु बुद्धिविषयतावच्छेदकत्वं शाब्दबोधविषयतया शक्तिग्रहो नास्तीति कृत्वा उपलक्षणमित्युच्यते। अत एव तत् शाब्दबोधे विषयो न भवति।

1) अत्र केचिदेवं प्रथमप्रश्नस्य समाधानमाहुः—

यद्यपि बुद्धिविषयतावच्छेदकत्वेन रूपेण घटत्वपटत्वादयः धर्माः शक्त्यनुभवे (शक्तिग्रहे) विषयाः भवन्ति। एतादृशेन शक्त्यनुभवेन उत्पन्नः संस्कारोऽपि बुद्धिविषयतावच्छेदकत्वेन रूपेण घटत्वादीनवगाहते। परन्तु कारणान्तरवशात् बुद्धिविषयतावच्छेदकत्वांशे यः संस्कारः स न नश्यति। तस्मात् केवलं

घटत्वादिविषयिणी एव शक्तिस्मृतिरुदेति, न तु बुद्धिविषयतावच्छेदकत्वेन रूपेण घटत्वादिविषयिणी। तथा केवलं घटत्वादिविषयकशक्तिस्मरणेन तादृशघटत्वादीनाम् एव पदार्थोपस्थितिः, तादृशानामेव शाब्दबोधः न तु बुद्धिविषयतावच्छेदकत्वेन रूपेण घटत्वादीनां शाब्दबोध इति। एवं च बुद्धिविषयतावच्छेदकत्वस्य घटत्वपटत्वाद्यनुगमकत्वात् नाननुगमः। नापि बुद्धिविषयतावच्छेदकत्वस्य शाब्दबोधे भानमिति।

2. द्वितीयप्रश्नस्य समाधानमेवं भवति--

यादृशघटपटादिपदार्थेषु तत्पदेन व्यवहारो दृष्टः तत्र तत्पदस्य तत्पदप्रयोगकारणीभूतबुद्धिप्रकारविशिष्टे शक्तिः गृह्यते। 'घटोऽस्ति तमानय' इति वाक्यप्रयोगकाले घटपदार्थज्ञाने सत्येव तच्छब्दप्रयोगो भवति। नान्यथा। यः कोऽपि पदार्थः बुद्धौ नास्ति चेत् तच्छब्दप्रयोगादर्शनात्। तथा च 'घटोऽस्ति तमानय' इति वाक्ये तच्छब्दप्रयोगं प्रति घटज्ञानं कारणम्। घटज्ञाने प्रकारीभूतधर्मः घटत्वम्। तद्विशिष्टे शक्तिं गृह्णातीत्यर्थः। एवं च क्वचित् स्थले व्यवहारदर्शनविषये घटादौ तत्पदोच्चारणप्रयोजकज्ञानप्रकारीभूतधर्मविशिष्टे शक्तिग्रहणानन्तरं स पुरुष इममेव न्यायं सर्वत्र संचारयति- 'यद्यत् तत्पदं यादृशधर्मावच्छिन्नविषयकबुद्ध्या प्रयुज्यते तत्तत् तत्पदं तादृशतादृशधर्मविशिष्टे शक्तम्' इति रीत्या। यथा चैत्रेण इतः पूर्वं कदाप्यदृष्टे अज्ञाते इदानीमेव दृश्यमाने शब्देन बोध्यमाने च देवदत्तादावपि तच्छब्दस्य शक्तिः गृह्यते। तथा हि मैत्रेण `अयं देवदत्तो नाम राजा अस्ति। तस्य यज्ञदत्तः इति पुत्रः' इत्युच्यमाने चैत्र एवमवधारयति। "मैत्रस्य देवदत्तविषयिणी बुद्धिर्वर्तते इति कृत्वा सः तच्छब्दं प्रयुङ्क्ते। एवं चैतद्वाक्यस्थं तत्पदं देवदत्तविषयकबुद्ध्या प्रयुज्यते, तस्मात् तादृशतत्पदोच्चारणप्रयोजकबुद्धिप्रकारी भूतदेवदत्तत्वविशिष्टे शक्तमिदं तत्पदम्" इति। एवंरीत्या पूर्वमदृष्टवस्तुष्वपि तत्पदादेः शक्तिग्रहो भवतीति न काप्यनुपपत्तिः।

## 11. अस्मच्छब्दशक्तिविचारः

स्वतन्त्रोच्चारयितरि अस्मच्छब्दस्य शक्तिः। स्वतन्त्रोच्चारणं नाम वाक्यान्तरस्थक्रियाकर्मतापन्नस्वघटितवाक्यार्थ प्रत्यायनेच्छानधीनमुच्चारणम्। चैत्रेण प्रयुक्ते 'अहं सुन्दरः' इति वाक्ये अस्मच्छब्दे समन्वयः। स्वम् = अस्मच्छब्दः। स्वघटितं वाक्यम् 'अहं सुन्दरः' इति वाक्यम्। स्वघटितवाक्यस्य अर्थः चैत्रनिष्ठं सौन्दर्यम् (अथवा सुन्दराभिन्नः चैत्रः) इति वाक्यार्थः। तादृशवाक्यार्थप्रतिपादनेच्छा चैत्रस्य यद्यपि वर्तते इति कृत्वा स्वघटितवाक्यार्थप्रत्यायनेच्छाधीनमेव तस्योच्चारणम्। तथापि चैत्रेण स्वघटितवाक्यार्थः वाक्यान्तरस्थक्रियाकर्मत्वेन प्रतिपिपादयिषितः नास्ति। तथा च स्वघटितवाक्यार्थे वाक्यान्तरस्थक्रियाकर्मत्वरूपविशेषणाभावेन वाक्यान्तरस्थ क्रियाकर्मतापन्नस्वघटितवाक्यार्थप्रत्यायनेच्छा नास्ति। यतः अत्र 'अहं सुन्दरः' इत्येकमेव वाक्यं वर्तते, न तु वाक्यान्तरं किमपि। यद्यत्र 'अहं सुन्दरः इत्यस्य अनन्तरम् `इति देवदत्तो वदति' इत्यादिरीत्या वाक्यान्तरं स्यात् तदा स्वघटितवाक्यार्थः = चैत्रनिष्ठं सौन्दर्यं, वाक्यान्तरस्था या उक्तिक्रिया तत्कर्मतया प्रतिपादयितुमिष्टः स्यात्। तदा वाक्यान्तरस्थक्रियाकर्मतापन्नत्वेन स्वघटितवाक्यार्थ प्रत्यायनेच्छा वाक्यप्रयोक्तुः स्यात्। परन्तु 'इति देवदत्तो वदति' इत्यादिरूप वाक्यान्तरमेव नास्ति। तथा च चैत्रस्य स्वघटितवाक्यार्थप्रत्यायनेच्छासद्भावेऽपि वाक्यान्तरस्थक्रियाकर्मतापन्नस्वघटितवाक्यार्थप्रत्यायनेच्छा नास्तीति तादृशप्रत्यायनेच्छानधीनं चैत्रस्योच्चारणं, तत्स्वतन्त्रोच्चारणमेवेति तादृशस्वतन्त्रोच्चायितरि अस्मच्छब्दस्य शक्तिः।

'देव्युवाच - मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः' इति मेधामहर्षिणा सुरथनामकं राजानं प्रत्युक्तं वाक्यम्। एतद्वाक्यं देवीसप्तशतीग्रन्थे दृश्यते। मया=देव्या, त्वयि=महिषासुरे हते सति देवताः आशु गर्जिष्यन्ति इति देव्या

महिषासुरं प्रत्युक्तं रणरङ्गे। तं प्रसङ्गं मेधामहर्षिः सुरथं बोधयति। एवं चात्र मया इति अस्मच्छब्देन देव्याः, त्वयि इति युष्मच्छब्देन महिषासुरस्य च प्रतीतिः अपेक्षिता। परन्तु इदानीं तावत् एतद्वाक्यं ऋषिणा सुरथं प्रति उच्यते न तु देव्या महिषं प्रति। तथा च वाक्यप्रयोक्ता ऋषिः संबोध्यश्च सुरथः इति तयोरेव अस्मद्-युष्मद्भ्यां प्रतीतिर्भवेदिति आक्षेपः।

परन्तु अस्याः आपत्तेः पूर्वोक्तपरिष्काररीत्या परिहारो भवति। यतः ऋषिरत्र स्वतन्त्रोच्चारयिता नास्ति। तथा हि-'मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः' इत्येकं वाक्यम् अवान्तरवाक्यम्। 'इति देव्युवाच' इत्यपरं वाक्यं महावाक्यम्। स्वं = मया इत्यस्मच्छब्दः। स्वघटितं वाक्यं= मया त्वयि इति प्रथमं वाक्यम्। स्वघटितवाक्यस्यार्थः=देवीकर्तृकमहिषासुरकर्मकहननोत्तरकालिकगर्जनाश्रयाः देवताः इति वाक्यार्थः। तादृशः वाक्यार्थश्च वाक्यान्तरस्थक्रियाकर्मतया प्रतिपादयितुं वक्त्रा इष्टः। वाक्यान्तरम्='इति देव्युवाच' इति महावाक्यरूपं वाक्यान्तरम्। वाक्यान्तरस्थक्रिया = देवीकर्तृकोक्तिक्रिया, उक्तिक्रियाकर्म= देवीकर्तृकमहिषासुरकर्मकहननोत्तरकालिकगर्जनाश्रयाः देवताः इति अवान्तरवाक्यार्थः। महावाक्यार्थबोध आवश्यकश्चेत् अवान्तरवाक्यार्यबोध आवश्यकः। तथा च ऋषेः 'महावाक्यार्थभूतदेवीकर्तृकोक्तिक्रियाकर्मतया एव अवान्तरवाक्यार्थबोधः सुरथस्य भवतु' इति इच्छा वर्तते। न तु 'केवलं स्वघटितावन्तरवाक्यार्थबोधः सुरथस्य भवतु' इति। तथा चास्मिन्महावाक्ये अस्मच्छब्दघटितावान्तरवाक्यार्थः महावाक्यरूपवाक्यान्तरस्थोक्तिक्रियाकर्मतया प्रतिपादयितुमिष्ट इति वाक्यान्तरस्थक्रियाकर्मतापन्नस्वघटितवाक्यार्थ प्रत्यायनेच्छाधीनमुच्चारणं ऋषेरुच्चारणम्। न तु तादृशेच्छानधीनमुच्चारणम्। तस्मात् अस्मच्छब्देन न ऋषेः प्रतीतिः, किन्तु देव्याः एव। अथ वा ऋष्युक्तवाक्य

समानाकारकदेव्युक्तवाक्यप्रतिसन्धानेन तादृशवाक्योच्चारयितृत्वेन देव्याः अस्मच्छब्दवाच्यत्वोपपत्तिः।

यदा तावत् देवी महिषासुरं प्रति 'मया त्वयि हतेऽत्रैव' इति वाक्यं वदति, तत्र 'इति देव्युवाच' इत्यादिवाक्यान्तरं नास्ति। तथा च स्वघटितवाक्यार्थः वाक्यान्तरस्थक्रियाकर्मत्वेन प्रतिपिपादयिषितो नास्ति। तथा च वाक्यान्तरस्थक्रियाकर्मतापन्नस्वघटितवाक्यार्थ प्रत्यायनेच्छानधीनमुच्चारणं देव्याः एतद्वाक्योच्चारणं, तत्कर्त्री देवी इति देव्याः अस्मच्छब्देन प्रतीतिर्युज्यते।

परन्तु यदा ऋषिः 'देव्युवाच-मया त्वयि हतेऽत्रैव' इति वाक्यं वदति तस्मात् वाक्यात् देव्याः प्रतीतिर्नोपपद्यते इति शङ्का अवतरति। यतः एतादृशपरिष्काररीत्यापि स्वतन्त्रोच्चारयितरि अस्मच्छब्दस्य शक्तिः। इदानीं तावत् देवी एतद्वाक्यं न वदति, किन्तु ऋषिरेव। पूर्वं महिषेण साकं युद्धकाले यदा देवी एतद्वाक्यमुक्तवती तदा देव्याः स्वतन्त्रोच्चारयितृत्वात् अस्मच्छब्देन तस्याः प्रतीतिः संभवति। तदङ्गीकर्तुं शक्यते। न तत्र विप्रतिपत्तिः। परन्तु इदानीं ऋषिणा उच्चार्यमाणेन वाक्येन 'देव्युवाच-मया त्वयि' इति वाक्येन कथं देव्याः प्रतीतिः? देव्याः एतद्वाक्योच्चारयितृत्वाभावात् इति।

एतस्याः अनुपपत्तेः परिहारार्थं स्वघटितवाक्यार्थकर्मक-वाक्यान्तरस्थक्रियाकर्तरि अपि अस्मच्छब्दस्य शक्तिः स्वीकरणीया।

अस्मच्छब्दस्य अर्थत्रये शक्तिः

1) स्वतन्त्रोच्चारयितरि अस्मच्छब्दस्य शक्तिः। स्वतन्त्रोच्चारणं च वाक्यान्तरस्थक्रियाकर्मतापन्नस्वघटितवाक्यार्थ प्रत्यायनेच्छानधीनमुच्चारणम्।

2) स्वघटितवाक्यार्थकर्मक-वाक्यान्तरस्थक्रियाकर्तरि शक्तिः।

3) अथवा केवलमुच्चारयितरि शक्तिः।

अत्र ऋषिप्रयुक्तवाक्येन देव्याः प्रतीतिः द्वितीयशक्त्या उपपाद्यते। तथा हि - स्वघटितवाक्यार्थः = देवीकर्तृकमहिषासुरकर्मकहननोत्तर कालीनगर्जनाश्रयाः

देवताः इति वाक्यार्थः। तादृशवाक्यार्थः वाक्यान्तरस्थोक्तिक्रियां प्रति कर्म। तथा च तादृशवाक्यार्थकर्मिका वाक्यान्तरस्थक्रिया=उक्तिक्रिया। उक्तिक्रियायाः कर्त्री देवी। यतः देव्या एव पूर्वमेषोऽर्थः महिषं प्रति उक्तः। तथा च स्वघटितवाक्यार्थकर्मक-वाक्यान्तरस्थक्रिया उक्तिक्रिया। तत्कर्तृत्वात् देव्याः अस्मच्छब्दवाच्यत्वम्। अत एव 'अयं देवदत्तः अहं पण्डित इति मन्यते' इति चैत्रवाक्यस्थास्मच्छब्दात् देवदत्तस्य प्रतीतिरुपपद्यते। अत्र देवदत्तः मौनव्रते तिष्ठति। तथापि सः स्वात्मानं पण्डितत्वेन मन्यते। तादृशदेवदत्तस्य विषये चैत्रेण मैत्रं प्रति एतद्वाक्यमुक्तम्। अत्र अस्मच्छब्देन देवदत्तस्य प्रतीतिर्न युक्ता। देवदत्तस्य मौनित्वेन वाक्योच्चारयितृत्वाभावात् इति शङ्का। परन्तु अस्मच्छब्दस्य द्वितीयशक्तिस्वीकारेण सानुपपत्तिः परिहृता। यतः स्वघटितवाक्यार्थः देवदत्तनिष्ठं पाण्डित्यम् इति वाक्यार्थः। तादृशवाक्यार्थकर्मिका वाक्यान्तरस्थक्रिया देवदत्तनिष्ठा ज्ञानक्रिया (पण्डित इति ज्ञानम्)। तस्याः कर्ता देवदत्त इति अत्र अस्मच्छब्देन देवदत्तस्य प्रतीतिर्युक्ता।

'अहं पण्डित इति विद्वांसं (देवदत्तं) पश्य' इति वाक्ये चैत्रेण मैत्रं प्रति प्रयुक्ते अस्मच्छब्देन देवदत्तः प्रतीयते इति वस्तुस्थितिः। परन्तु मैत्रस्य प्रतीतिस्स्यात् न तु देवदत्तस्य इति शङ्का भवति। तथा हि - अत्र देवदत्तनिष्ठपाण्डित्य रूपस्वघटितवाक्यार्थः, ज्ञानक्रियायां यथा कर्म भवति तथा दर्शनक्रियायामपि कर्म भवति। तादृशस्वघटितवाक्यार्थकर्मक-वाक्यान्तरस्थक्रिया दर्शनक्रिया मैत्रनिष्ठा, तस्याः कर्ता मैत्रः न तु देवदत्तः। तथा च एतद्वाक्यस्थ - अस्मच्छब्देन मैत्रस्य प्रतीतिर्भवतु इति। तथापि स्वघटितवाक्यार्थः अत्र साक्षात् ज्ञानक्रियायामेव कर्म भवति, न तु दर्शनक्रियायाम्। तस्मात् स्वघटितवाक्यार्थकर्मक-वाक्यान्तरस्थक्रिया नाम ज्ञानक्रिया। तस्याः कर्ता देवदत्त इति तस्यैवास्मत्पदशक्यत्वं, न तु मैत्रस्य अन्यस्य वा। एवं यदा मैत्रः 'चैत्रः सुन्दरः' इति वाक्यं प्रयुङ्क्ते। अनन्तरं तत् श्रुत्वा चैत्रः 'अहं सुन्दरः' इति प्रयुङ्क्ते, तदा चैत्रोच्चारणस्य अन्योच्चारणाधीनत्वसत्वात् =

मैत्रोच्चारणाधीनत्वसत्त्वात् स्वतन्त्रोच्चारणत्वाभावेन तादृशस्वतन्त्रोच्चारयितृत्वाभावेन अस्मच्छब्दवाच्यत्वं नेति शङ्काया अप्यनवकाशतैव। चैत्रस्य अन्योच्चारणाधीनोच्चारणवत्त्वेऽपि पूर्वोक्तस्य वाक्यान्तरस्थक्रियाकर्मतापन्नस्वघटितवाक्यार्थप्रत्यायनेच्छानधीनोच्चारणसत्त्वात् अस्मच्छब्दवाच्यत्वम्। 'अहं सुन्दरः' इत्यनन्तरंम् 'इत्ययं जानाति' इत्यादिवाक्यान्तराभावात्। वाक्यान्तरस्थक्रियाकर्मतापन्नत्वरूपविशेषणाभावेन तादृशवाक्यार्थप्रत्यायनेच्छानधीनत्वस्य तदुच्चारणेऽक्षतत्वात्।

शङ्का---'अहमत्रास्मीति मैत्रो जानाति' इति चैत्रवाक्यस्यास्मच्छब्देन मैत्रस्य प्रतीतिर्भवति। तत्र स्वघटितवाक्यार्थक-वाक्यान्तरस्थज्ञानक्रियाकर्तृत्वं मैत्रस्य वर्तते। तस्मात् मैत्रस्य तत्र अस्मच्छब्देन प्रतीतिर्युक्तैव। परन्तु अत्र 'अस्मच्छब्देन चैत्रस्यापि प्रतीतिर्भवतु' इतीच्छासत्त्वे चैत्रस्यापि प्रतीतिर्भवति। परन्तु पूर्वोक्तरीतिद्वयेनापि अत्र चैत्रस्य वाच्यत्वं नोपपद्यते। यतः 'अत्राहमस्मि' इत्यवान्तरवाक्यम्। 'इति मैत्रो जानाति' इत्यपरं वाक्यम्। तथा च 'अहमत्रास्मीति मैत्रो जानाति' इति महावाक्यम्। अत्र च चैत्रास्तित्वरूपः अवान्तरवाक्यार्थः महावाक्यार्थभूतज्ञानकर्मत्वेन प्रतिपादयितुमिष्टः। तथा च वाक्यान्तरस्थक्रियाकर्मत्वेन स्वघटितवाक्यार्थ प्रत्यायनेच्छाधीनत्वमस्य उच्चारणस्य वर्तते न तु तदनधीनत्वम्। तथा च प्रथमशक्त्या चैत्रप्रतीतिर्नोपपद्यते। एवं द्वितीयशक्त्यापि चैत्रप्रतीतिर्न युक्ता। यतः स्वघटितवाक्यार्थकर्मक-वाक्यान्तरस्थज्ञानक्रियाकर्ता मैत्र एव न तु चैत्रः। तथा चोक्तशक्तिद्वयेनापि चैत्रप्रतीतिर्न युक्ता।

समाधानम्---तथा सति केवलम् उच्चारयितरि अस्मच्छब्दस्य शक्तिरिति स्वीक्रियते। न तु निरुक्तरीत्या स्वतन्त्रोच्चारयितरि। तथा च चैत्रस्य निरुक्तस्वतन्त्रोच्चारयितृत्वाभावेऽपि उच्चारयितृत्वसत्त्वात् चैत्रस्य अस्मच्छब्देन प्रतीतिरुपपद्यते।

एवं सति मया त्वयि इत्यादिवाक्यात् ऋषिप्रतीतिर्भवतु इति शङ्का भवति। तथापि तत्र ऋषिप्रतीतौ तात्पर्याभावेनैव तद्वारणं संभवतीति न काप्यनुपपत्तिः।

### 12. युष्मच्छब्दशक्तिविचारः

अस्मच्छब्दस्येव युष्मच्छब्दस्यापि अर्थद्वये शक्तिः---

1) स्वसंबोध्ये युष्मच्छब्दस्य शक्तिः। स्वसंबोध्यत्वं च वाक्यान्तरस्थक्रियाकर्मत्वेन स्वघटितवाक्यार्थानवगाहिनी या स्वजन्यप्रतीत्याश्रयत्वेनेच्छा तद्विषयत्वम्।

2) स्वघटितवाक्यार्थकर्मक-वाक्यान्तरस्थक्रियाकर्मणि युष्मच्छब्दस्य शक्तिः।

3) अथवा केवलं संबोध्ये शक्तिः। संबोध्यत्वं च स्वजन्यप्रतीत्याश्रयत्वेनेच्छाविषयत्वम्।

यदा चैत्रेण मैत्रं प्रति 'त्वं सुन्दरः' इति वाक्यं प्रयुज्यते तत्र समन्वयः। स्वं=त्वम् इति युष्मच्छब्दः। तज्जन्या प्रतीतिः 'मैत्रः सुन्दरः' इति प्रतीतिः। 'तादृशप्रतीत्याश्रयः मैत्रो भवतु' इति चैत्रस्येच्छा तादृशेच्छाविषयत्वं मैत्रे वर्तते। अत्र च 'त्वं सुन्दरः' इत्यस्यानन्तरम् 'इत्ययं जानाति' इत्यादिरूपं वाक्यान्तरं किमपि नास्तीति कृत्वा अत्र चैत्रस्य 'वाक्यान्तरस्थज्ञानादिक्रियाकर्मतापन्नस्वघटितवाक्यार्थविषयक-स्वजन्यप्रतीत्याश्रयो मैत्रो भवतु' इति इच्छा नास्ति। किन्तु केवलं 'युष्मच्छब्दजन्यप्रतीत्याश्रयः मैत्रो भवतु' इति इच्छैव वर्तते। तस्यां चेच्छायां स्वघटितवाक्यार्थः वाक्यान्तरस्थक्रियाकर्मत्वेन विषयो नास्ति। तथा च वाक्यान्तरस्थक्रियाकर्मत्वेन स्वघटितवाक्यार्थानवगाहिनी या 'युष्मच्छब्दजन्य प्रतीत्याश्रयः मैत्रो भवतु' इतीच्छा, तद्विषयत्वं मैत्रेऽस्तीति लक्षणसमन्वयः।

एवमेव यदा देव्या महिषं प्रति 'मया त्वयि हते' इत्यादिवाक्यमुच्यते, तादृशवाक्यजन्यप्रतीत्याश्रयत्वेनेच्छाविषयत्वं महिषे वर्तते, यतः 'मया त्वयि इति वाक्यजन्यप्रतीत्याश्रयः महिषो भवतु' इति देवीच्छा। तस्मात् महिषस्य युष्मच्छब्दवाच्यत्वम्।

परन्तु मेधामहर्षिणा सुरथं प्रत्युच्यमानेन 'देव्युवाच-मया त्वयि हतेऽत्रैव' इत्यादिवाक्यस्थेन युष्मच्छब्देन सुरथस्य प्रतीतिर्न संभवति। यतः तत्र 'मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः' इत्येकं वाक्यम्। 'इति देव्युवाच' इत्यपरं वाक्यम्। ऋषेश्च 'या वाक्यान्तरस्थक्रिया=देव्युक्तिरूपक्रिया, तादृशक्रियाकर्मतापन्नः यः स्वघटितवाक्यार्थः = देवीकर्तृकमहिषकर्मकहननोत्तरकालिकगर्जनाश्रयाः देवताः इति वाक्यार्थः, तद्विषयकः यः युष्मच्छब्दजन्यबोधः = तादृशवाक्यान्तरस्थोक्तिक्रियाकर्मतापन्नस्वघटितवाक्यार्थबोधः तदाश्रयः सुरथो भवतु' इत्येवमिच्छा वर्तते। एतादृशेच्छायाः अर्थस्तु एवम्--

अत्र 'मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः' इत्यवान्तरं वाक्यम्। तादृशावान्तरवाक्यघटितं 'मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः इति देव्युवाच' इति महावाक्यम्। अत्र ऋषेस्तावत् केवलं "'मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः' इत्याकारकावान्तरवाक्यजन्यबोधाश्रयः सुरथो भवतु इतीच्छा" नास्ति। किन्तु "देव्या महिषं प्रति 'मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः इत्यर्थ उक्तः' इत्याकारकमहावाक्यार्थबोधाश्रयः सुरथो भवतु" इतीच्छैव वर्तते। तादृशमहावाक्यार्थबोधः भवितव्यश्चेत् अवान्तरवाक्यार्थबोधोऽप्यावश्यक इति 'महावाक्यार्थबोधान्तर्गततया एव अवान्तरवाक्यार्थबोधो भवतु' इति ऋषेरिच्छा। तथा च अत्रावान्तरवाक्यार्थः महावाक्यार्थभूतोक्तिक्रियायां कर्म भवति। तथा च 'अवान्तरवाक्यार्थबोधाश्रयः सुरथो भवतु' इति ऋषेरिच्छायाम् अवान्तरवाक्यार्थः महावाक्यार्थकर्मतया एव विषयः। तथा च ऋषेः सुरथविषयिणी या युष्मच्छब्दजन्यप्रतीत्याश्रयत्वेनेच्छा सा अवान्तरवाक्यार्थं महावाक्यार्थकर्मत्वेन नियमतो विषयीकरोति। तथा च वाक्यान्तरस्थक्रियाकर्मतापन्नस्वघटित वाक्यार्थानवगाहिनी ऋषेः सुरथविषयिणी स्वजन्यप्रतीत्याश्रयत्वेनेच्छा न संभवति। तस्मात् तादृशेच्छाविषयत्वाभावात् सुरथस्य न संबोध्यत्वम्।

'सुरथ, मया उच्यमानां कथां त्वं श्रृणु' इति ऋषिवाक्ये तु एकस्यैव वाक्यस्य सत्त्वात् 'एतद्वाक्यजन्यप्रतीत्याश्रयः सुरथो भवतु' इत्याकारिकायाम् ऋषेरिच्छायां स्वघटितवाक्यार्थः वाक्यान्तरस्थक्रियाकर्मतया न अभिप्रेतः। तथा च तादृशेच्छाविषयत्वस्य सुरथे सत्त्वात् सुरथस्य युष्मच्छब्दवाच्यत्वम्।

1) परन्तु एवमपि उक्ते ऋषिवाक्ये 'मया त्वयि हतेऽत्रैव इति देव्युवाच' इत्यस्मिन् त्वयि इत्यनेन महिषासुरस्य प्रतीतिर्नोपपद्यते। यतः 'एतादृशमहावाक्यार्थकर्मतया अवान्तरवाक्यार्थः सुरथेन प्रतीतो भवतु' इति ऋषेरिच्छाविषयः सुरथ एव, न तु महिषः। महिषस्य ऋषिणा एतद्वाक्यस्योच्चारणकालेऽभावेन 'एतद्वाक्यजन्यप्रतीत्याश्रयः महिषो भवतु' इति ऋषेरिच्छाया असंभवात्। तथा युष्मच्छब्दस्य प्रथमशक्त्या महिषप्रतीत्यनुपपत्तिः। तत्परिहाराय द्वितीयशक्त्यनुसरणम्। तथा चात्र स्वं = युष्मच्छब्दः। स्वघटितवाक्यार्थः = मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः इति वाक्यार्थः। स च वाक्यार्थः 'इति देव्युवाच' इति वाक्योक्तोक्तिक्रियां प्रति कर्म। तथा च स्वघटितवाक्यार्थकर्मिका या वाक्यान्तरस्थक्रिया=उक्तिक्रिया, तां प्रति महिषः कर्म भवति। यतः महिषं प्रति देवी एतद्वाक्यं पूर्वकाले उक्तवती। तथा च स्वघटितवाक्यार्थकर्मक-वाक्यान्तरस्थक्रियाकर्मत्वात् महिषस्य युष्मच्छब्दवाच्यत्वम्।

शङ्का----'चैत्र, त्वया भुक्तमिति मया श्रुतम्' इति चैत्रं प्रति मैत्रोच्चरितवाक्यात् युष्मच्छब्देन चैत्रस्य प्रतीतिर्भवति इति वस्तुस्थितिः। परन्तु अत्र रीतिद्वयेनापि चैत्रस्य प्रतीतिर्नोपपद्यते। तथा हि, प्रथमशक्तिरत्र नोपपद्यते--'चैत्र त्वया भुक्तम्' इत्यवान्तरवाक्यम्। 'चैत्र त्वया भुक्तमिति मया श्रुतम्' इति महावाक्यम्। अत्र 'अवान्तरवाक्यार्थः महावाक्यार्थभूतश्रवणक्रियाकर्मतया चैत्रेण बोद्धव्यः' इत्येव मैत्रेच्छा सत्त्वात्, स्वजन्यप्रतीत्याश्रयत्वेन या इच्छा सा वाक्यान्तरस्थश्रवणक्रिया

कर्मतया स्वघटितवाक्यार्थावगाहिन्येव, न तु तदनवगाहिनीति, तादृशवाक्यार्थानवगाहीच्छाविषयत्वं चैत्रस्य नास्ति। तथा च प्रथमशक्तिरत्र नोपपद्यते। एवं द्वितीयशक्तिरपि। अत्र वाक्यान्तरस्थक्रिया श्रवणक्रिया। तस्याः कर्म=चैत्रेण भुक्तमिति वाक्यार्थः, न तु चैत्रः। तथा च चैत्रस्य स्वघटितवाक्यार्थ कर्मकवाक्यान्तरस्थक्रियाकर्मत्वाभावात् द्वितीया शक्तिरपि नोपपद्यते। तथा च कथमत्र युष्मच्छब्देन चैत्रस्य प्रतीतिः?

समाधानम्----एवं सति स्वजन्यप्रतीत्याश्रयत्वेनेच्छाविषयत्वरूपसंबोध्यत्व घटकेच्छायां वाक्यान्तरस्थक्रियाकर्मत्वेन स्वघटितवाक्यार्थानवगाहित्वरूपं यद्विशेषणं पूर्वं दत्तमासीत् तत् त्यज्यते एव। तथा च केवलं स्वजन्यजन्यप्रतीत्या श्रयत्वेनेच्छाविषय त्वं संबोध्यत्वम्। तादृशसंबोध्ये युष्मच्छब्दस्य शक्तिः। तथा च 'चैत्र, त्वया भुक्तमिति मया श्रुतम्' इत्यत्र 'एतद्वाक्यजन्यशाब्दबोधः चैत्रस्य भवतु' इति मैत्रीयेच्छाविषयत्वस्य चैत्रे सत्त्वात् तस्य संबोध्यत्वम्, अत एव च युष्मच्छब्दवाच्यत्वमुपपद्यते। एवं तर्हि 'मया त्वयि हतेऽत्रैव.... इति देव्युवाच' इत्यत्रापि 'एतद्वाक्यजन्यजन्यप्रतीत्याश्रयः। सुरथो भवतु' इतीच्छाविषयत्वस्य सुरथे सत्त्वात् सुरथस्य वाच्यत्वं स्यादित्याक्षेपः परमवशिष्यते। तथापि तत्र 'अत्रत्येन त्वया इत्यनेन सुरथस्य प्रतीतिर्भवतु' इत्याकारकतात्पर्यविरहादेव सुरथप्रतीतिः वारयितुं शक्यते। तथा च न काप्यनुपपत्तिः।

अथ वा महिषस्य इदानीं ऋषिणा संबोध्यत्वस्याभावेऽपि ऋष्युक्तवाक्यसमानाकारकदेवीवाक्यसंबोध्यत्वप्रतिसन्धानादेव वा 'त्वयि' इत्यनेन महिषस्य प्रतीतिरुपपादयितुं शक्यते।

नागेशभट्टाभिप्रायः

अस्मच्छब्दघटितवाक्यप्रयोक्तुरहंकारानास्पदचेतने युष्मत्पदस्य शक्तिः। 'चैत्र, त्वं सुन्दरोऽसि' इत्यादौ एतद्वाक्यप्रयोक्तुरहंबुद्धिः स्वात्मनि मैत्रादावेवोत्पद्यते,

न तु संबोध्ये चैत्रादौ। तथा च अहंकारानास्पदचेतनः चैत्रः। तस्मिन्नेव युष्मदः शक्तिरिति नागेशभट्टा आहुः (ल.मं.पृ.1165)।

**13. सर्वशब्दशक्तिविचारः**

सर्वशब्दस्य अशेषत्वमर्थः। 'सर्वे घटाः रूपवन्तः' इत्यादौ अशेषघटानां रूपवत्त्वप्रतीतेः। अत एव एक एव घटो वर्तते चेत् 'सर्वे घटा' इति न प्रयुज्यते। अशेषत्वं कीदृशमिति प्रश्ने समाधीयते। तथा हि यावत्त्वमेव अशेषत्वम्। यावत्त्वं च 'स्वार्थान्वयितावच्छेदकव्यापिका स्वार्थान्वय्यन्वयिव्याप्या च या पर्याप्तिः तादृशपर्याप्तिकधर्मः' इति निरूपितम्। तदेवात्र विस्तरेण निरूप्यते।

1) स्वार्थान्वयितावच्छेदकधर्मव्यापिका स्वार्थान्वयितावच्छेदकधर्मावच्छिन्नान्वयिव्याप्या च या पर्याप्तिः तादृशपर्याप्तिविशिष्टधर्मावच्छिन्ने सर्वशब्दस्य शक्तिः।

'सर्वे घटाः रूपवन्तः' इत्यत्रैवं समन्वयः। स्वं सर्वशब्दः। स्वार्थः यावत्त्वम्, तस्यान्वयः घटेषु। 'सर्वे घटाः' इति सर्वशब्दस्य घटशब्दविशेषणत्वात् सर्वशब्दार्थस्य घटशब्दार्थे अन्वयस्वीकारस्यावश्यकत्वात्। तथा च स्वार्थान्वयवान्=स्वार्थान्वयी घटः। स्वार्थान्वयितावच्छेदकधर्मः घटत्वम्। घटत्वव्यापिका पर्याप्तिः यावत्त्वरूपधर्मस्य पर्याप्तिः। सर्वेषु घटेषु यावत्त्वम् = अशेषत्वं तावत् पर्याप्तिसंबन्धेन वर्तते। तथा च यत्र यत्र घटत्वं तत्र सर्वत्रापि यावत्त्वरूपधर्मस्य पर्याप्तिर्वर्तते इति व्याप्तिसद्भावात् घटत्वं व्याप्यम्, यावत्त्वपर्याप्तिर्व्यापिका। एवं स्वार्थान्वयितावच्छेदकधर्मः=घटत्वम्। तदवच्छिन्ने घटे रूपस्यान्वयः स्वीक्रियते। तथा च स्वार्थान्वयितावच्छेदकधर्मावच्छिन्नान्वयि रूपम्। रूपव्याप्या च यावत्त्वस्य पर्याप्तिः। यत्र यत्र घटगतयावत्त्वपर्याप्तिः =सर्वघटेषु, तत्र सर्वत्रापि रूपम् इति व्याप्तिसद्भावात्। घटगतयावत्त्वपर्याप्तिः रूपव्याप्या भवति न तु रूपं



घटगतयावत्त्वपर्याप्तिव्याप्यम्। यत्र यत्र रूपं घटपटादिषु बहुषु द्रव्येषु, तत्र

घटगतयावत्त्वपर्याप्तेरभावेन तादृशव्याप्तेरसंभवात्। तथा च घटगतयावत्त्वपर्याप्तिः स्वार्थान्वयितावच्छेदकघटत्वव्यापिका, तथा स्वार्थान्वयितावच्छेदकघटत्वावच्छिन्नान्वयिरूपव्याप्या च भवति। तादृशपर्याप्तिमान् धर्मः घटगतयावत्त्वम्। तादृशयावत्त्वरूपधर्मविशिष्टघटः सर्वपदार्थः। तथा च घटगतं यावत्त्वमेव सर्वशब्दप्रवृत्तिनिमित्तमिति सिध्यति।

2. एवं यावत्त्ववत् अनेकत्वमपि सर्वशब्दार्थ इति स्वीकरणीयम्। अत एव 'सर्वं गगनं शब्दवत्' इति प्रयोगस्य असाधुत्वम्। अन्यथा तत्र गगनगतयावत्त्वपर्याप्तेः शब्दव्याप्यत्वसत्त्वेन तस्यापि साधुत्वापत्तिः। अनेकत्वस्य सर्वशब्दप्रवृत्तिनिमित्तत्वस्वीकारे च गगनस्यैकत्वेन अनेकत्वाभावान्न तादृशप्रयोगः।

अत एव 'सर्वाणि द्रव्याणि रूपवन्ति' इत्यसाधु। तत्र द्रव्यगतयावत्त्वपर्याप्तेः द्रव्यत्वव्यापकत्वेऽपि तादृशद्रव्यान्वयि(स्वार्थान्वयितावच्छेदकद्रव्यत्वावच्छिन्नान्वयि)रूपव्याप्यत्वाभावात्। यत्र यत्र द्रव्यगतयावत्त्वपर्याप्तिः तत्र तत्र रूपमिति व्याप्तेः आत्माकाशादौ भङ्गात्। तत्र द्रव्यगतयावत्त्वपर्याप्तिसत्त्वेऽपि रूपाभावात्।

एवमेव 'सर्वे घटा नीलाः' इत्यपि न प्रयोगः। तत्र घटगतयावत्त्वपर्याप्तेः नीलरूपव्याप्यत्वाभावात्। पीतघटादौ घटगतयावत्त्वपर्याप्तिसत्त्वेऽपि नीलरूपाभावात्।

एवं 'काले सर्वे वृत्तिमन्तः' इति वाक्ये एवं समन्वयः। 'सन्ति' इत्यध्याह्रियते। तथा च 'सर्वे वृत्तिमन्तः पदार्थाः काले सन्ति' (कालसंबन्धवन्तः) इत्यर्थः। अत्र सर्वपदार्थस्य 'वृत्तिमत्'पदार्थे अन्वयः स्वीक्रियते। स्वार्थान्वयितावच्छेदकं वृत्तिमत्त्वम्। स्वार्थान्वयितावच्छेदकधर्मावच्छिन्ने 'वृत्तिमत्'पदार्थे 'सन्ति' इतिपदवाच्यसत्तायाः (कालसंबन्धस्य) अन्वयः स्वीक्रियते। तथा च 'वृत्तिमत्' पदार्थगतयावत्त्वपर्याप्तिः वृत्तिमत्त्वव्यापिका तथा सत्ता(कालसंबन्ध)व्याप्या च वर्तते इति तादृशपर्याप्तिविशिष्टयावत्त्वमेव सर्वशब्दार्थः।

'घटे सर्वाणि रूपाणि सन्ति' इति प्रयोगश्चासमञ्जसः। तत्र स्वार्थान्वयितावच्छेदकं रूपत्वम्। रूपत्वव्यापकत्वं यद्यपि रूपगतयावत्त्वपर्याप्तौ वर्तते। यत्र यत्र रूपत्वं तत्र तत्र रूपगतयावत्त्वपर्याप्तिः इति व्याप्तेः। परन्तु रूपगतयावत्त्वपर्याप्तौ स्वार्थान्वयितावच्छेदकरूपत्वावच्छिन्नान्वयि 'घटनिरूपिताधेयता'व्याप्यत्वं नास्ति। यत्र यत्र रूपगतयावत्त्वपर्याप्तिः सर्वघटपटादिगतरूपेषु, तत्र सर्वत्र घटनिरूपिताधेयतायां अभावात्।

'सर्वेषु घटेषु रूपम्' इत्यत्र एवं समन्वयः। तत्र स्वार्थान्वयः घटे। स्वार्थान्वयितावच्छेदकं घटत्वम्। घटत्वव्यापिका च घटगतयावत्त्वपर्याप्तिः। यत्र यत्र घटत्वं सर्वघटेषु, तत्र सर्वत्र घटगतयावत्त्वपर्याप्तिः इति नियमात्। एवं घटगतयावत्त्वपर्याप्तिः स्वार्थान्वयितावच्छेदकघटत्वावच्छिन्नान्वयिरूपव्याप्या अपि। यत्र यत्र घटगतयावत्त्वपर्याप्तिः तत्र सर्वत्र रूपम् इति व्याप्तेः। तथा च तादृशपर्याप्तिविशिष्टधर्मः घटगतयावत्त्वं तत्र सर्वशब्दार्थः।

एवं च 'सर्वे घटा रूपवन्तः' 'सर्वेषु घटेषु रूपम्' इत्युभयत्र उद्देश्यविधेयभावव्यत्यासेऽपि स्वार्थान्वयी घट एव, स्वार्थान्वय्यन्वयि रूपमेवेति तत्र समन्वयः।

'सर्वं प्रमेयम्' इत्यादौ अपि 'वस्तु' इतिपदमध्याहार्यम्। तथा च 'सर्वोऽपि पदार्थः प्रमेयः' इत्यर्थः। अत्र स्वार्थान्वयी पदार्थः (वस्तु)। वस्तुपदाध्याहाराभावे स्वार्थान्वयी एव नास्तीत्यापतेत्।

3. यदि च 'सर्वं प्रमेयम्' इत्यत्र प्रमेयपदाध्याहारं विनापि शाब्दबोधोऽनुभवसिद्धः, तदा तत्र समन्वयार्थम् अन्योन्याभावप्रतियोगितानवच्छेदक विधेयव्याप्यपर्याप्तिकयावत्त्वं सर्वशब्दार्थ इति स्वीकरणीयम्। 'इदं न प्रमेयत्ववत्' इति भेदस्य यत्र कुत्रापि प्रदर्शयितुमशक्यत्वात् अन्योन्याभावप्रतियोगितानवच्छेदकं विधेयं प्रमेयत्वम्। प्रमेयत्वव्याप्या च सर्ववस्तुगतयावत्त्वपर्याप्तिः। यत्र यत्र

वस्तुगतयावत्त्वं तत्र तत्र प्रमेयत्वमिति व्याप्तेः। तथा च तत्र प्रमेयत्वव्याप्यपर्याप्तिविशिष्टवस्तुगतयावत्त्वमेव सर्वशब्दार्थः।

4. 'अयं योगी सर्वं घटं वेत्ति' इत्यादौ स्वार्थान्वयी घटः। स्वार्थान्वयितावच्छेदकधर्मः घटत्वम्। तदवच्छिन्ने घटे योगिज्ञानविषयतायाः निरूपकतासंबन्धेन अन्वयः। तस्मात् यद्रूपावच्छिन्ने योगिज्ञानविषयताया अन्वयः तद्रूपावच्छिन्नयोगिज्ञानविषयताव्याप्यत्वं घटगतयावत्त्वपर्याप्तौ। न तु यत्किंचिद्विषयताव्याप्यत्वम्। तथा सति सर्वेषु घटेषु चैत्रीयज्ञानविषयत्वाभावेऽपि यत्किंचिद्विषयत्वसद्भावेन घटगतयावत्त्वपर्याप्तेः विषयताव्याप्यत्वेन चैत्रस्य सर्वघटज्ञानाभावदशायामपि 'चैत्रः सर्वं घटं जानाति' इति प्रयोगापत्तेः।

तथा च घटत्वव्यापिका योगिज्ञानीयघटत्वावच्छिन्नविषयताव्याप्या च या घटगतयावत्त्वपर्याप्तिः तादृशपर्याप्तिविशिष्टधर्मः अस्मिन् वाक्ये सर्वशब्दार्थः।

5. एवं 'घटे न सर्वाणि रूपाणि' इत्यत्र सर्वशब्दार्थस्य रूपशब्दार्थे अन्वयः। रूपशब्दार्थस्य नञर्थाभावेऽन्वयः।

अत्र च घटे सर्वरूपप्रतियोगिकरूपाभावः बोधनीयतया न विवक्षितः। तथा सति घटे किमपि रूपं नास्ति इति प्रतीत्यापत्तेः। किन्तु घटे कानिचन रूपाणि सन्ति, न तु सर्वाणि रूपाणि इत्यर्थो विवक्षितः। तथा च घटे रूपसत्त्वेऽपि सर्वत्वविशेषणाभावप्रयुक्तसर्वरूपाभावः बोधनीयः।

तस्मात् एतादृशस्थले सर्वपदस्य स्वार्थान्वयितावच्छेदकरूपत्वव्यापिका या पर्याप्तिः तद्विशिष्टयावत्त्वमर्थः। न तु तादृशपर्याप्तौ किंचिद्व्याप्यत्वादिकं भासते। एतादृशरूपत्वव्यापकपर्याप्तिकयावत्त्वं तावत् उभयत्वादिवत् व्यासज्यवृत्तिः। तथा च यथा भूतले घटसत्त्वेऽपि घटपटोभयत्वावच्छिन्नप्रतियोगिताकाभावः भूतलेऽक्षतः, एवमेव घटे किंचिद्रूपसत्त्वेऽपि तादृशरूपत्वव्यापकपर्याप्ति

कयावत्त्वावच्छिन्नप्रतियोगिताकरूपाभावः (सर्वरूपाभावः) अक्षत एव। स एवानेन वाक्येन बोध्यते।

6. 'सर्वं द्रव्यं न रूपवत्' इत्यत्र स्वार्थान्वयितावच्छेदकधर्मः द्रव्यत्वम्। तादृशद्रव्यत्वव्यापिका द्रव्यगतयावत्त्वपर्याप्तिः। न तु तादृशयावत्त्वपर्याप्तौ स्वार्थान्वय्यन्वयिव्याप्यत्वं भासते। तादृशपर्याप्तिविशिष्टयावत्त्वं सर्वशब्दार्थः। अत एव 'तादृशद्रव्यत्वव्यापकपर्याप्तिकयावत्त्वसमानाधिकरणरूपाभाववत् द्रव्यम्' इति अत्र बोधः। द्रव्यत्वाधिकरणे यत्र कुत्रचित् आत्माकाशादौ रूपाभावो वर्तते इति तदर्थः। न तु सर्वद्रव्येषु रूपाभावो वर्तते इति, घटादिषु द्रव्येषु रूपाभावस्य बाधितत्वात्।

7. एवं यद्रूपावच्छिन्ने पदान्तरोपस्थाप्यार्थे स्वार्थान्वयः, तद्रूपावच्छिन्नान्विततया यद्यद्धर्मावच्छिन्ना उपक्रान्ताः

प्रत्येकं तत्तद्धर्मावच्छिन्नेष्वपि सर्वपदस्य शक्तिः स्वीकरणीया। 'चैत्रः दधि भुङ्क्ते, मैत्रः पयो भुङ्क्ते, देवदत्तः घृतं भुङ्क्ते, विष्णुमित्रः तत्सर्वमेव भुङ्क्ते' इत्युदाहरणम्। ये पदार्थाः पूर्वमुपक्रान्ताः तेष्वपि सर्वशब्दस्य शक्तिरित्यर्थः। पूर्वं दधि-पयो-घृतानामुपक्रान्तत्वात् सर्वशब्दस्य दधि-पयो-घृतेषु शक्तिः। 'विष्णुमित्रः तत्सर्वं भुङ्क्ते' इत्यत्र सर्वपदेन दधि-पयो-घृतानां प्रतीतेः।

परिष्कारसमन्वयस्तु एवम् - यद्रूपावच्छिन्ने=कर्मत्वत्वावच्छिन्ने, पदान्तरोपस्थाप्यार्थे=अम्पदोपस्थाप्ये कर्मत्वे, स्वार्थान्वयः=सर्वपदार्थस्यान्वयः, तद्रूपावच्छिन्नान्विततया=कर्मत्वत्वावच्छिन्नान्विततया, यद्यद्धर्मावच्छिन्नाः=दधित्व-पयस्त्व-घृतत्वावच्छिन्नाः उपक्रान्ताः=पूर्वं प्रकरणेन प्राप्ताः, तत्तद्धर्मावच्छिन्नेषु=दधित्व-पयस्त्व-घृतत्वावच्छिन्नेषु सर्वपदस्य शक्तिः इति।

**नागेशभट्टाशयः**

सर्वशब्दस्य बुद्धिविषयो यावत्त्वावच्छिन्नसमूहः अर्थः। यावत्त्वं च एकत्वद्वित्वभिन्न(बहुत्व)संख्याकृतपरिच्छेदवत्त्वम्। यथा एको घटो वर्तते चेत् 'घटो वर्तते' इति प्रयोगः, द्वौ चेत् 'द्वौ घटौ वर्तेते' इति प्रयोगः। एतदधिकसंख्या भवति चेदेव सर्वशब्दः प्रयुज्यते।

परन्तु तत्रापि विशेषो भवति। यदि यावत्त्वावच्छिन्नसमूहस्य सर्वशब्दार्थत्वं तदा समूहस्य सर्वदा एकत्वात् (घटसमूहस्य एकत्वात्) सर्वदा एकवचनमेव प्रयोक्तव्यं स्यात्। परन्तु यदि घटसमूहीयावयवभूतघटगतबहुत्वसंख्या समूहे आरोप्यते, तदा 'सर्वे घटाः' इति प्रयोगः। अन्यथा तु 'सर्वो घटः' इत्येकवचनमेव। एवमेव 'सर्व ओदनो भुक्तः' इति प्रयोगोप्युपपादनीयः। तत्र ओदने सर्वत्वाभावेऽपि ओदनावयवगतसर्वत्वस्य अवयविनि ओदने आरोपः। तथा च एकवचनोपपत्तिः।

**14. किंशब्दशक्तिविचारः**

किंपदस्य सामान्यतः वक्तृजिज्ञासिते शक्तिः। अत एव जिज्ञासाज्ञापनाय सर्वत्र किंशब्दप्रयोगः दृश्यते।

1. तत्र उद्देश्यवाचककिंपदस्य स्वसमभिव्याहृतपदोपस्थाप्यवस्तुनिष्ठ विधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितः विधेयन्यूनवृत्तिश्च यः धर्मः तद्विशिष्टे शक्तिः। यथा- 'कः पचति' इति प्रश्नवाक्यम्। 'चैत्रः पचति' इत्युत्तरवाक्यम्। अत्र प्रश्नवाक्ये पाककृतिः विधेया। सा च स्व(=किंपद) समभिव्याहृतपचतिपदोपस्थाप्या। तादृशकृतिनिष्ठविधेयतानिरूपितोद्देश्यता प्रश्नविषयीभूतपाककर्तरि। तादृशोद्देश्यतावच्छेदकं चैत्रत्वादिकं, तच्च विधेयभूतपाककृतिन्यूनवृत्तिधर्मः। 'यत्र चैत्रत्वं तत्र पाककृतिः' इति व्याप्तेः प्रदर्शयितुं शक्यत्वेऽपि 'यत्र यत्र पाककृतिः तत्र तत्र चैत्रत्वम्' इति व्याप्तेः मैत्रादौ बहुत्र भङ्गात्।



तथा च स्वसमभिव्याहृतपदोपस्थाप्यनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकः

विधेयन्यूनवृत्तिश्च यः, तादृशोद्देश्यतावच्छेदकधर्मत्वेन वक्तृजिज्ञासितः धर्मः (चैत्रत्वं मैत्रत्वं वा) किंपदप्रवृत्तिनिमित्तम्। तथा च 'कः पचति' इति प्रश्नवाक्यस्य पाककृतिनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकधर्मः वक्तृजिज्ञासाविषयः इत्यर्थः। अथ वा पाककर्तृत्वेन अभिप्रेतः वक्तृजिज्ञासाविषयः इत्यर्थः।

अत्र तादृशोद्देश्यतावच्छेदकधर्मे विधेयन्यूनवृत्तित्वनिवेशात् 'कः पचति' इति प्रश्नस्य 'प्रमेयः पचति' इति प्रयोगापत्तिवारणम्। तत्र प्रमेयत्वस्य पाककृतिनिष्ठ विधेयतानिरूपितोद्देश्यतावच्छेदकत्वसत्त्वेऽपि विधेयभूतपाककृतिन्यूनवृत्तित्वाभावात्।

2. किंशब्दसहितशब्दान्तरस्यैव उद्देश्यवाचकत्वे तु स्वार्थाभेदान्वयितावच्छेदक धर्मन्यूनवृत्तिः समभिव्याहृतपदोपस्थाप्यनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकतया वक्तृजिज्ञासाविषयश्च यो धर्मः सः प्रवृत्तिनिमित्तम्।

यथा 'को ब्राह्मणः पचति' इति प्रश्नवाक्यस्य 'चैत्रः पचति' इत्युत्तरम्। न तु 'मनुष्यः पचति' इत्युत्तरम्। पाककृतिनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकतया विवक्षितस्य मनुष्यत्वस्य किंशब्दार्थाभेदान्वयितावच्छेदकब्राह्मणत्वन्यूनवृत्तित्वाभावात्। तादृशोद्देश्यतावच्छेदकचैत्रत्वादेस्तु ब्राह्मणत्वन्यूनवृत्तित्वात् तादृशोत्तरस्य समीचीनतोपपद्यते। तथा हि 'को ब्राह्मणः पचति' इति प्रश्नवाक्ये किंशब्दार्थस्य जिज्ञासितस्य ब्राह्मणशब्दार्थे अभेदेनान्वयः। 'पाककर्ता ब्राह्मणः जिज्ञासाविषयः' इति तद्वाक्यात् प्रतीतेः। तथा च किंशब्दार्थाभेदान्वयी ब्राह्मणः। अभेदान्वयितावच्छेदकं ब्राह्मणत्वम्। तादृशं ब्राह्मणत्वं च ब्राह्मणमात्रे वर्तते, मनुष्यत्वं तु सर्वेषु मनुष्येषु इति ब्राह्मणत्वं न्यूनवृत्ति, मनुष्यत्वम् अधिकवृत्ति। चैत्रः बाह्मणविशेषः इति कृत्वा चैत्रत्वं ब्राह्मणत्वन्यूनवृत्ति। तथा च 'मनुष्यः पचति' इति उत्तरवाक्ये उद्देश्यतावच्छेदकीभूतमनुष्यत्वस्य किंशब्दार्थाभेदान्वयितावच्छेदक ब्राह्मणत्वन्यूनवृत्तित्वाभावात् 'मनुष्यः पचति' इति उत्तरं न दीयते। अत एव 'को



ब्राह्मणः पचति' इति प्रश्नवाक्येऽपि उद्देश्यतावच्छेदके

किंशब्दार्थाभेदान्वयितावच्छेदकब्राह्मणत्वन्यूनवृत्तित्वं भासते। 'को ब्राह्मणः पचति' इत्यत्र उद्देश्यतावच्छेदकतया जिज्ञासितचैत्रत्वादेः ब्राह्मणत्वन्यूनवृत्तित्वात् तादृशप्रश्नवाक्यस्य उत्तरमपि 'चैत्रः पचति' इति दीयते। तस्मात् स्वार्था(किंशब्दार्था)भेदान्वयितावच्छेदकधर्मन्यूनवृत्तित्वमपि उद्देश्यवाचकपदान्तर घटितकिंशब्दस्थले किंशब्दार्थ इति स्वीकरणीयम्।

3) उद्देश्यतावच्छेदके किंपदार्थस्याभेदेनान्वयस्थले तु किंपदार्थान्वयिनि विशेषणतापन्नो यः किंपदार्थान्वयितावच्छेदकधर्मन्यूनवृत्तिधर्मः तदवच्छिन्नोद्देश्य तावच्छेदकताकविधेयज्ञानगोचरेच्छा किंशब्दार्थः।

यथा 'कति घटाः सन्ति' इति प्रश्नवाक्यस्य 'दश घटाः सन्ति' इत्युत्तरवाक्यम्। 'कति घटाः सन्ति' इत्यत्र उद्देश्यः घटः, विधेयं सत्ता। उद्देश्यतावच्छेदकं संख्या। तथा च 'जिज्ञासाविषयकसंख्याकघटाः सन्ति' इत्यर्थः। अत्र च कति इत्यस्य 'किंसंख्याकाः' इत्यर्थः। डतिप्रत्ययस्य संख्यार्थकत्वात्। किंपदार्थस्य जिज्ञासितस्य अभेदेन संख्यायामन्वयः। तथा च किंपदार्थाभेदान्वयिनी संख्या। तत्र विशेषणतापन्नः धर्मः दशत्वत्वादिकम्। सः धर्मः किंपदार्थान्वयितावच्छेदकसंख्यात्वन्यूनवृत्तिश्च। तादृशदशत्वत्वावच्छिन्ना दशत्वसंख्या। तादृशदशत्वसंख्या च सत्तानिष्ठाविधेयता-निरूपितघटनिष्ठोद्देश्यतावच्छेदिका भवति। तथा च 'कति घटाः सन्ति' इत्यत्र किंपदार्थान्वयिन्यां संख्यायां विशेषणीभूत-किंपदार्थान्वयितावच्छेदक संख्यात्वन्यूनवृत्तिदशत्वत्वरूप(दशत्वत्वादिरूप) धर्मावच्छिन्नदशत्वसंख्यादिनिष्ठोद्देश्य तावच्छेदकताक सत्तारूपविधेयज्ञानगोचरेच्छा किंशब्दार्थः। अत एव 'कति घटाः सन्ति' इति प्रश्नस्य 'दश घटाः सन्ति' इत्याद्युत्तरं युज्यते। न तु 'नीलघटाः सन्ति' इति 'पीतघटाः सन्ति' इति वा। नीलत्वादीनां संख्यात्वन्यूनवृत्तित्वाभावात्।

4) उद्देश्यतावच्छेदकीभूते विभक्त्याद्यर्थे भेदसंबन्धेन किंपदार्थान्वयस्थले तत्र विशेषधर्मावच्छिन्नविशेषिततदवच्छिन्ननिष्ठोद्देश्यतावच्छेदकताक

प्रकृतविधेयज्ञानगोचरेच्छा प्रतीयते। यथा 'कस्य पुत्रः सुन्दरः' इति प्रश्नस्य 'चैत्रस्य पुत्रः सुन्दरः' इत्युत्तरम्। तत्र 'कस्य' इति किंशब्दः ङस्प्रत्ययश्च वर्तेते। किंशब्दार्थः जिज्ञासितः। ङस्प्रत्ययार्थश्च संबन्धः=जन्यत्वम्। किंशब्दार्थस्य ङस्प्रत्ययार्थजन्यत्वे निरूपितत्वसंबन्धेनान्वयः। जन्यत्वस्य च पुत्रपदार्थपुत्रे आश्रयतासंबन्धेनान्वयः। तादृशपुत्रे सौन्दर्यं विधीयते। उद्देश्यः पुत्रः। उद्देश्यतावच्छेदकं ङस्प्रत्ययार्थजन्यत्वम्। तत्र चैत्रत्वादिविशेषधर्मावच्छिन्नविशेषित जन्यत्वत्वावच्छिन्नजन्यत्वनिष्ठोद्देश्यतावच्छेदकताकसौन्दर्यरूपप्रकृतविधेयज्ञानगोचरे च्छा किंशब्दार्थः। 'चैत्रादिनिरूपितजन्यताश्रय पुत्रोद्देश्यकसौन्दर्यज्ञानगोचरेच्छा' इति तात्पर्यम्।

5). विधेयवाचककिंपदस्य स्वसमभिव्याहृतपदोपस्थाप्यनिष्ठोद्देश्यतानिरूपितविधेय तावच्छेदकतया जिज्ञासितो यो धर्मः तदवच्छिन्ने शक्तिः। यथा 'अयं कः' इति प्रश्नस्य 'अयं चैत्रः' 'अयं ब्राह्मणः' इत्याद्युत्तरम्। तत्र स्वं=किंपदम्। स्वसमभिव्याहृतपदम् इदं पदम्। तदुपस्थाप्यम् उद्दिश्य अभेदेन चैत्रादिर्विधीयते। एवं च विधेयतावच्छेदकं चैत्रत्व-ब्राह्मणत्वादिकम्। अतः तादृशविधेयतावच्छेदकतया जिज्ञासितचैत्रत्वादिविशिष्टे किंपदस्य शक्तिः।

6) 'किमिन्दुः किंपद्मं किमु मुकुरबिम्बं किमु मुखम्' इत्यादौ एकं प्रियामुखं दृष्ट्वा बहुधा वितर्कयति 'एतत् चन्द्रो वा पद्मं वा' इत्यादिरीत्या। तत्र किंशब्दस्य अव्ययस्य वितर्कः अर्थः। वितर्कश्च संभावनात्मकं ज्ञानम्। तस्मिन् ज्ञाने चन्द्र-पद्मादीनां स्वनिष्ठप्रकारतानिरूपितप्रकारितासंबन्धेन अन्वयः। चन्द्रादेः अभेदसंबन्धेन मुखे प्रकारतया भासमानत्वेन चन्द्रादेरेव प्रकारत्वम्, न तु चन्द्रत्वादेः। ज्ञानस्य च विशेष्ये मुखे विशेष्यतासंबन्धेनान्वयः। तथा च 'चन्द्रादिप्रकारकसंभावनाज्ञानविशेष्यं मुखम्' इति शाब्दबोधः। एतादृशसंभावनाबोधोत्तरं मुखे चन्द्रादिवदाह्लादकरत्वादिप्रतीतिस्तु अनन्तरमेवार्थात् भवति।

एवं 'धनमिदं किं चैत्रस्य' इत्यादौ चैत्रनिरूपितस्वत्वस्याश्रयतासंबन्धेन धने प्रकारत्वात्, आश्रयत्वसंबन्धावच्छिन्नप्रकारितैव 'चैत्रस्य' इतिषष्ठ्यन्तपदसमुदायार्थस्य किंपदार्थसंभावनायां संसर्गः। तथा च 'आश्रयतासंबन्धावच्छिन्न चैत्रनिरूपितस्वत्वप्रकारिता श्रयसंभावनाज्ञानविशेष्यं पुरोवर्ति धनम्' इति शाब्दबोधः।

7) क्वचित् किंपदं कुत्सार्थकम्। यथा 'किंगौः' इत्यादौ।

**नागेशभट्टाशयः**

'कः पचति' 'को ब्राह्मणः पचति' 'अयं कः' 'किमिन्दुः किं पद्मम्' 'धनमिदं किं चैत्रस्य' 'किंगौः' इति स्थलेषु गदाधररीत्यैव नागेशेन प्रतिपादनं कृतम्।

प्रश्नवाक्ये यत्प्रधानं तत्समानलिङ्ग-वचनवता शब्देनैव उत्तरं दातव्यमिति नियमः। तथा च 'के शिष्याः अस्य' इति प्रश्ने सति प्रश्नवाक्यस्थकिंपदसमानलिङ्ग-वचनकमेव उत्तरं भवति। तादृशं 'कठाः' इति पुंलिङ्गबहुवचनान्तम्। न तु 'कठः' इत्येकवचनान्तम्।

एवं 'किंशिष्योऽयम्' इति 'के शिष्याः अस्य गुरोः' इति बहुव्रीहिसमासगर्भप्रश्ने सति तत्र अन्यपदार्थस्य गुरोः एकत्वेन तादृशमेकवचनान्तमेव उत्तरवाक्यं 'कठः' इत्युत्तरं दीयते। अयं कठशाखां पाठयतीत्यर्थः। अयं गुरुः कठशाखां पाठयति चेत् शिष्या अपि कठशाखाध्येतारः इत्यर्थात् सिध्यति। तस्मात् तत्र 'कठः' इत्येवोत्तरं, न तु 'कठाः' इति। प्रश्नवाक्याननुगुणत्वात्।

**15. स्वशब्दशक्तिविचारः**

1) साक्षात् परम्परया यः 'स्व'पदार्थस्य विशेष्यः एवं स्वपदजन्यप्रतीतिविषयत्वेन वक्त्रिच्छाविषयश्च तस्मिन् स्वपदस्य शक्तिः।

2) स्वपदजन्यबोधविषयत्वेन वक्त्रिच्छाविषये 'स्व'शब्दसमभिव्याहृतक्रियाकारके स्वशब्दस्य शक्तिः।

1) 'तादात्म्येन शुक्लस्ववान् घटः' इत्यत्र 'तादात्म्यसंबन्धावच्छिन्नशुक्लस्वनिष्ठाधेयतानिरूपिताधिकरणतावान् घटः' इति बोधः। अत्र 'स्व'पदार्थः घटपदार्थे साक्षादेव विशेषणम्। अतः स्वपदेन घटस्य प्रतीतिः। एतत्तु मतुपः संबन्ध्यर्थकत्वाभावमभिप्रेत्य। 'स्वव्यापकवह्नि समानाधिकरणधूमवान् पर्वतः' इत्यत्र 'धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वतः' इति बोधः। अत्र स्वपदार्थः परम्परया धूमे विशेषणम्। अतः स्वपदार्थो धूमः। 'स्वपुत्रदर्शिचैत्रधनम्' इत्यत्र'स्वपुत्रकर्मकदर्शनाश्रयचैत्रसंबन्धिधनम्' इति शाब्दबोधः। अत्र स्वपदार्थः परम्परया चैत्रे विशेषणम्। अतः स्वं=चैत्रः।

'स्वपुत्रदर्शिनं चैत्रं मैत्रः पश्यति' इत्यत्र स्वपदार्थस्य चैत्रे विशेषणत्वात् स्वपदेन चैत्रबोधः। 'स्वपुत्रकर्मकदर्शनाश्रयचैत्रकर्मकदर्शनाश्रयः मैत्रः' इति बोधः।

2) 'चैत्रपुत्रः स्वं पश्यति' इत्यत्र स्वपदसमभिव्याहृतक्रिया दर्शनक्रिया। तत्कर्तृत्वं चैत्रपुत्रेऽस्तीति स्वपदस्य चैत्रपुत्रोऽर्थः। एवं 'चैत्रः स्वं पश्यति' 'चैत्रभ्राता स्वं पश्यति' 'चैत्रावलोकितं स्वपुत्रं मैत्रः पश्यति' 'चैत्रानीतं स्वपुत्रं मैत्रः पश्यति' 'चैत्रः स्वपुत्रं पश्यति' इत्यादिस्थलेषु बोध्यम्। 'चैत्रभ्राता स्वं पश्यति' इत्यत्रापि समभिव्याहृतदर्शनक्रियाकर्तृत्वं चैत्रभ्रातरि वर्तते इति स्वपदवाच्यत्वं चैत्रभ्रातुः। 'स्वपुत्रश्चैत्रेण दृश्यते' इत्यत्र 'चैत्रकर्तृकदर्शननिरूपितविषयताश्रयः स्वपुत्रः' इति बोधः। अत्रापि दर्शनक्रियाकर्तृत्वं चैत्रस्य इति चैत्रः स्वपदवाच्यः। 'स्वपुत्रश्चैत्रभ्रात्रा दृश्यते' इत्यत्र स्वसमभिव्याहृतदर्शनक्रियाकर्तुः चैत्रभ्रातुः स्वशब्देन प्रतीतिः। 'चैत्रेणावलोकितं स्वपुत्रं मैत्रः पश्यति' इत्यत्र स्वसमभिव्याहृतदर्शनक्रियाकर्तुः मैत्रस्य बोधः। परन्तु 'अत्र चैत्रबोधो भवतु' इति तात्पर्यसत्त्वे स्वपदेन चैत्रस्यापि प्रतीतिर्भवति। तस्यापि 'स्व'पदसमभिव्याहृतावलोकनक्रियाकर्तृत्वात्। एवमेव 'चैत्रेणानीतं स्वपुत्रं मैत्रः पश्यति' इत्यत्रापि तात्पर्यसत्त्वे भवत्येव चैत्रप्रतीतिः।

'चैत्रमभिवन्दते स्वपुत्रः' इत्यत्र 'स्व'पदसव्यभिव्याहृताभिवन्दनक्रियाकर्मत्वात् चैत्रप्रतीतिः।

'स्वव्यापकवह्निसामानाधिकरण्यं धूमे' इत्यत्र धूमस्य परम्परया 'स्व'पदार्थविशेषणत्वाभावेऽपि तत्र 'अस्ति' इति क्रियाध्याहारेण तादृशास्तित्वक्रियां प्रत्यधिकरणत्वं धूमेऽस्तीति स्वसमभिव्याहृतक्रियाकारकत्वस्याक्षतत्वात् तत्र स्वपदवाच्यत्वम्।

परन्तु 'स्वव्यापकवह्निसामानाधिकरण्यं धूमस्य' इति तु प्रयोगो न संगच्छते। तत्र षष्ठ्याः कारकविभक्तित्वाभावेन धूमस्य कथंचिदपि स्वसमभिव्याहृतक्रियाकारकत्वासंभवात्।

एवमपि 'चैत्रः स्वपुत्रं पश्यति' इत्यत्र दर्शनक्रियां प्रति चैत्रस्य कर्तृत्वमिव पुत्रस्य कर्मत्वमपि वर्तते। तथा च स्वसमभिव्याहृतकर्मकारकस्य पुत्रस्य स्वपदेन प्रतीतिः किं न भवति? इति प्रश्नो भवति। एवमेव बहुत्र 'मैत्रः देवदत्ताय स्वपुत्रं ददाति' इत्यादौ मैत्रस्य कर्तृत्वमिव देवदत्तस्य संप्रदानत्वसत्त्वात् देवदत्तादिप्रतीतिः स्यात् इत्याक्षेपो भवति।

एवं 'स्वव्यापकवह्निसमानाधिकरणधूमवान्' इत्यत्र स्वपदार्थस्य परंपरया धूमे विशेषणत्वमिव परंपरया वह्नावपि विशेषणत्वं वर्तत इति वह्निप्रतीतिः स्वपदेन किं न भवति इत्याक्षेपः प्राप्नोति।

तस्य समाधानमेवम् - स्वपदजन्यबोधविषयत्वेनेच्छाविषयत्वे सति स्वार्थं प्रति साक्षात्परंपरया विशेष्ये स्वपदस्य शक्तिः। एवं स्वपदजन्यबोधविषयत्वे सति स्वसमभिव्याहृतक्रियाकारकं यत् तदुभयत्रैव स्वशब्दस्य शक्तिः।

तथा च 'चैत्रः स्वपुत्रं पश्यति' इत्यत्र पुत्रस्य स्वसमभिव्याहृतक्रियाकारकत्वे सत्यपि स्वपदजन्यबोधविषयत्वेन वक्त्रिच्छाविषयत्वं नास्तीति न पुत्रस्य स्वपदवाच्यत्वम्।

एवमेव 'मैत्रः देवदत्ताय स्वपुत्रं ददाति' इत्यत्रापि देवदत्तपुत्रयोः स्वसमभिव्याहृतक्रियां प्रति संप्रदानत्व-कर्मत्वयोस्सत्त्वेऽपि स्वपदजन्यबोधविषयत्वेन वक्रिच्छाविषयत्वं नास्तीति तयोर्न स्वपदवाच्यत्वम्। एवमन्यत्रापीति बोध्यम्। (हरिनाथटीका)।

एवमेव निजपदस्यापि स्वशब्दवदेव स्वसमभिव्याहृतक्रियाकारके स्वार्थं प्रति परंपरया साक्षाद्वा विशेष्ये च उभयत्र शक्तिः।

एवम् आत्मीय-धन-ज्ञातीनपि स्वशब्दो वदति। 'स्वमज्ञातिधनाख्यायाम्' इति पाणिनिसूत्रात् इति नागेशभट्टो वदति। (ल.मं.पृ.1168)।

**16. एकशब्दशक्तिविचारः**

एकशब्दस्य कैवल्यविशिष्टे शक्तिः। एवं मुख्यत्वविशिष्टे, अन्यत्वविशिष्टे च शक्तिः। तत्र केवलत्वं नाम स्वसजातीयवस्तुनिष्ठभेदप्रतियोगित्वम्। स्वसजातीयत्वं च प्रकृतविधेयवत्त्वम्।

यथा 'गृहे एको देवदत्तः फलं भुङ्क्ते' इत्यत्र एतद्गृहाधिकरणकफलभोजन कर्तृनिष्ठभेदाप्रतियोगी देवदत्तः फलकर्मकभोजनवान् इत्यर्थः। एवं च देवदत्तस्य इदानीं सजातीयः एतद्गृहे अन्यः कोऽपि फलं भुङ्क्ते चेत्स एव सजातीयो भवेत्। तदा तादृशसजातीयान्यनिष्ठभेदप्रतियोगित्वं देवदत्ते संभवेत्। परन्तु तादृशः अन्यः कोऽपि तत्र नास्तीति कृत्वा तादृशसजातीयान्यनिष्ठभेदाप्रतियोगी एव देवदत्तः। तस्मिन्नेव एकशब्दस्य शक्तिः।

'अयम् एकं फलं भुङ्क्ते' इत्यत्र 'एतत्कर्तृकभोजनसंसर्गप्रतियोगि कर्मत्वसंसर्गप्रतियोगि(फलान्तर)निष्ठभेदाप्रतियोगिफलकर्म भोजनानुकूलकृतिमान्' इत्यन्वयबोधः। चैत्रेण भुज्यमानं फलमेकमेव। अत्र एतत्पुरुषकर्तृकं भोजनम्। तस्य कर्मत्वेन सह संबन्धो वर्तते। अतः भोजननिष्ठसंसर्गप्रतियोगि कर्मत्वम्। कर्मत्वसंसर्गः फलान्तरे वर्तते। तथा च कर्मत्वनिष्ठसंसर्गप्रतियोगि फलान्तरं भवति।

तादृशफलनिष्ठभेदप्रतियोगित्वमेतस्मिन्फले इति अन्यत् फलं भवति चेत् एतत्कर्तृकभोजनसंसर्गप्रतियोगिकर्मत्वसंसर्गप्रतियोगि (फलान्तर)निष्ठभेदप्रतियोगित्वंम् एतस्मिफलेऽस्तीति सजातीयद्वितीयराहित्यं न स्यात्। परन्तु तादृशं फलमन्यत् नास्तीति कृत्वा एतत्कर्तृकभोजनसंसर्गप्रतियोगि कर्मत्वसंसर्गप्रतियोगिफलान्तरनिष्ठभेदाप्रतियोगित्वम् एतस्मिन् फले वर्तते। तदेव स्वसजातीयरहितत्वम्।

एवमेव मात्रशब्दस्थलेऽपि ग्राह्यम्।

इति शक्तिवादार्थसंग्रहः

।। श्रीगुरुराजो विजयते ।।[1]

# शक्तिवादे

# सामान्यकाण्डः

## पद-पदार्थयोः सम्बन्धोद्देशः

शक्तिलक्षणे पदवृत्ती[2]।

## पदार्थस्वरूपम्

वृत्त्या पदप्रतिपाद्य एव पदार्थ[3] इत्यभिधीयते।

## शक्तिस्वरूपम्

[[4]"इदं पदममुमर्थं बोधयतु" इति, "अस्मात्पदादयमर्थो बोद्धव्य" इति चेच्छा सङ्केतरूपा वृत्तिः।

तत्राधुनिकसङ्केतः परिभाषा। तया चार्थबोधकं पदं पारिभाषिकं - यथा शास्त्रकारादिसङ्केतितनदीवृद्ध्यादिपदम्।

ईश्वरसङ्केतः शक्तिः। तया चार्थबोधकं पदं वाचकं - यथा गोत्वादिविशिष्टबोधकं गवादिपदम्। तद्बोध्योऽर्थो गवादिर्वाच्यः। स एव मुख्यार्थ इत्युच्यते।

वाच्यवाचकादिपदे ईश्वरेच्छायाः बोधजनकत्वेन या विषयता सैव धात्वर्थः। तस्याः आश्रयत्वरूपं कर्तृत्वं पदे कर्तृप्रत्ययेन बोध्यते। "पदं गां वक्ति", "गां ब्रूते", "गोर्वाचक"मित्यादौ कर्मप्रत्ययान्तेनार्थवाचकपदेन तत्तदर्थविषयकत्वरूपं तत्तत्कर्मकत्वं धात्वर्थैकदेशे बोधे बोध्यते। "पदेन गौरुच्यते", "पदस्य गौर्वाच्य" इत्यादौ पदनिष्ठधात्वर्थीभूततादृशविषयतायाः परम्परया निरूपकत्वं, तच्च धात्वर्थीभूततादृशविषयतानिरूपकबोधजनकत्व-प्रकारतान्तःपातिबोधनिष्ठविषयता-निरूपकविषयितासम्बन्धावच्छिन्नप्रकारताऽऽश्रयत्वरूपं तादृशक्रियाकर्मत्वं गवादौ

---

[1] अस्मद्वंशीयसंप्रदायानुसारेण योजितम्। श्रीगणपतये नमः ज.

[2] सङ्केतो लक्षणा चार्थे पदवृत्तिः का.मं.

[3] का2.वृत्त्या पदप्रतिपाद्य एवार्थ का1. मं. वृत्त्या पदप्रतिपाद्य एव पदार्थ ग.



[4] का2 मं. ना.ज.

कर्मप्रत्ययेन बोध्यते। द्वितीयेच्छायाः सङ्केतरूपत्वे वैपरीत्यमूह्यमिति न्यायसिद्धान्तः।।]

[1]तत्र शक्तिविषयो वाच्यः, स एव मुख्यार्थः।

## न्यायमते शक्तिस्वरूपम्

अथ केयं शक्तिः?। अत्र नैयायिकाः "अस्माच्छब्दादयमर्थो बोद्धव्यः" इति परमेश्वरसङ्केतः शक्तिः। तस्याश्च[2] यद्यपि विषयतालक्षणः संबन्धः पदे अर्थेऽपि[3] वर्तते, तथापि बोधविषयतात्वेन बोधविषयताप्रकारतानिरूपितविशेष्यता[4] वाच्यताव्यवहारनियामिका। बोधकत्वेन विषयता वाचकताव्यवहारनियामिकेति न शब्दो[5] वाच्यः, अर्थो वा[6] न वाचक इति वदन्ति[7]।

---

[1] ज.इदं वाक्यं ना. का.

[2] च ना.ग.

[3] अर्थे च. अपि वर्तते ना. ग.

[4] बोधविषयत्वेन विषयता ग.

[5] शब्दो न ग.

[6] वा ना.ग.

[7] ज. संकेतो लक्षणा चार्थे पदवृत्तिः। वृत्त्या पदप्रतिपाद्य एव पदार्थ इत्यभिधीयते। "इदं पदममुमर्थं बोधयतु" इति, "अस्माच्छब्दादयमर्थो बोद्धव्य" इति वेच्छा सङ्केतरूपा वृत्तिः। तत्राधुनिकसङ्केतः परिभाषा। तया अर्थबोधकं पदं पारिभाषिकं - यथा शास्त्रकारादिसङ्केतितनदीवृद्ध्यादिपदम्। ईश्वरसङ्केतः शक्तिः। तया चार्थबोधकं पदं वाचकं - यथा गोत्वादिविशिष्टबोधकं गवादिपदम्। तद्बोध्योऽर्थो गवादिर्वाच्यः। स एव मुख्यार्थ इत्युच्यते। वाच्यवाचकादिपदे ईश्वरेच्छायाः बोधजनकत्वेन या विषयता सैव धात्वर्थः। तस्याश्रयत्वरूपं कर्तृत्वं पदे कर्तृप्रत्ययेन बोध्यते। "पदं गां वक्ति", "गां ब्रूते", "गोर्वाचकम्" इत्यादौ कर्मप्रत्ययान्तेनार्थवाचकपदेन तत्तदर्थविषयकत्वरूपतत्तत्कर्मकत्वं धात्वर्थैकदेशे बोधे बोध्यते। "पदेन गौरुच्यते", "पदस्य गौर्वाच्यः" इत्यादौ पदनिष्ठतादृशविषयतायाः परम्परया निरूपकत्वं, तादृशविषयतानिरूपकबोधजनकत्व-प्रकारतान्तःपातिबोधविषयतानिरूपक विषयितासम्बन्धा[illegible] तादृशक्रियाकर्मत्वं कर्मप्रत्ययेन बोध्यते। द्वितीयेच्छायाः सङ्केतरूपत्वे वैपरीत्यमूह्यमिति न्यायसिद्धान्तः। ग.

## मीमांसकमतरीत्या पूर्वपक्षः

अत्र **मीमांसकानुयायिनः** —अपभ्रंशादपि शक्तिभ्रमेणार्थ प्रत्ययात्सन्मात्रविषयके भगवत्संकेते तस्यापि बोधकत्वेन विषयत्वमिति नैयायिकैरभ्युपगमात् तस्यापि वाचकत्वं साधुत्वं च स्यात्।

एवं लाक्षणिकगङ्गादिपदस्योक्तयुक्त्या तीरादिवाचकत्वापत्तिः।

### भगवदुच्चरितत्वमेव वाचकत्वमिति अ.शङ्का

यत्तु तादृशेच्छया भगवदुच्चरितत्वं वाचकत्वम्। अपभ्रंशादयश्च नार्थप्रत्यायनेच्छया भगवदुच्चरिता इति नातिप्रसङ्ग इति।

### अवान्तरशङ्कासमाधानम्

तन्न। अस्मदाद्युच्चरितपदे[1] अव्याप्तेः। भगवदुच्चरित[2]जातीयत्वनिवेशेऽपि[3] वेदस्थलाक्षणिकेषु[4] अतिव्याप्तेः। सादिदेवदत्तादिपदे[5] अव्याप्तेश्च। "द्वादशेऽन्हि पिता नाम कुर्यात्" इति वेदे[6] नामपदस्य देवदत्तादिबोधक[7]पदपरत्वेऽपि "देवदत्त" इत्यादिपद[8]स्वरूपाणां तद[9]नुच्चरितत्वात्।

### ईश्वरसङ्केतस्य शक्तित्वे दोषान्तराणि

एवमीश्वरसंकेतस्य शक्तित्वे ईश्वरानङ्गीकर्तृनये[10] शाब्दबोधानुपपत्तिश्च[11]।

---

[1] पदेषु का.ग. मं.

[2] तज्जातीयत्व का. मं.

[3] "तज्जातीयत्वनिवेशेपि" इति कंसे निवेशितं. ग.

[4] शब्देषु ग.

[5] पदेषु का. मं.

[6] का.ग. मं.

[7] बोधक नास्ति का.ग. मं.

[8] पद ना.ग.

[9] भगवद् का.

[10] ईश्वरानङ्गीकर्तृ. म.



[11] पत्तिः का.ग.

अथ शाब्दबोधोपयोगितायामीश्वरीयत्वमनुपादेयम्[1]। एवं चाधुनिकसंकेत ज्ञानादपि शाब्दबोधः, तादृशसङ्केतस्य वृत्तित्वं च निर्वहति।

न चाधुनिकसंकेतस्य वृत्तित्वे तात्पर्यस्यापि तथात्वप्रसङ्गः। तस्यापि बोधकत्वेन पदविषयकतया संकेतरूपत्वात्। न चेष्टापत्तिः। तथा सति लक्षणास्थले तात्पर्यस्य वृत्तितया लक्षणायाः वृत्तित्वोच्छेदप्रसङ्गादिति वाच्यम्।

यतः पदार्थोपस्थितिव्यापारकः[2] संकेतो वृत्तिः; तात्पर्यज्ञानं च साक्षादेव शाब्दबोधोपयोगि[3], न तु[4] पदार्थोपस्थितिद्वारा; वृत्त्युपस्थापितपदार्थे एव प्रकरणादिना वक्तृतात्पर्यावधारणात्।

[तथा च लक्षणायाः वृत्तित्वानभ्युपगमे गङ्गादिपदात्तीराद्यनुपस्थितौ तत्र तत्पदव्यक्तेस्तात्पर्याग्रहाच्छाब्दबोधानुपपत्तिरिति तस्या वृत्तित्वमावश्यकम्।

न च तात्पर्यग्रहार्थं लक्षणाऽधीनोपस्थितेरपेक्षितत्वेऽपि तदधीनोपस्थितित्वेन शाब्दधीहेतुत्वे मानाभावात्तस्या वृत्तित्वासिद्धिः; लक्षणास्थले तात्पर्यात्मकसंकेताधीनोपस्थितित एव शाब्दबोधनिर्वाहादाधुनिकसंकेते तात्पर्याधीनोपस्थितेः शाब्दबोधप्रयोजकतायाः क्लृप्तत्वादिति वाच्यम्।

लक्षणाऽधीनपदार्थोपस्थितिसत्त्वे मुख्यार्थबाधादिना तत्तदर्थे तत्तत्पद व्यक्तेस्तात्पर्यग्रहे उपस्थित्यन्तरमन्तरेणैव तत्तत्पदार्थानुभवस्य सर्वानुभवसिद्धत्वात्। आधुनिकसंकेतस्थले च पूर्वसंकेतकर्तृपुरुषवाक्यादितोऽर्थविशेषे डित्थादिपदस्य संकेतग्रहात्तत्तत्पदेनार्थविशेषोपस्थितेः प्रकरणादिना तत्तत्पदव्यक्तेस्तत्र तात्पर्यग्रहे सति शाब्दबोधस्य वृत्त्यन्तराधीनोपस्थितिमन्तरेणैवोत्पत्त्या आधुनिकसंकेतस्य वृत्तित्वमपीति चेत्]

[1]तत्पुरुषसंकेतिततदुच्चरितडित्थादिपदेषु[2] आधुनिकसंकेतस्तत्पुरुषवाक्यादित एव प्रागवधारित इति पदार्थोपस्थितिपूर्वमेव तत्स्मरणसंभवेन तस्य पदार्थस्मारकतया वृत्तित्वनिर्वाह इति चेत्[3]

---

[1] एव अ.ग.

[2] नियामकः का. मं.

[3] उपयोगी ग.का.



[4] न का.

एवमपि संकेतस्य शब्द[4]संबन्धत्वे मानाभावेन, निष्प्रतियोगिकतया तदसंभवेन च पदार्थोपस्थापकत्वासंभवेन वृत्तित्वानिर्वाहात्।

एतेन "शाब्दबोधौपयिकसंबन्धत्वेनेश्वरसंकेतज्ञानं हेतुः, तच्च मीमांसकानामपि संभवति[5], तादृशज्ञानविरोधिविपरीतज्ञानाभावात्" इति[6] निरस्तम्।

---

[1] ज. "तथा च लक्षणायाः वृत्तित्वानभ्युपगमे गङ्गादिपदात्तीराद्यनुपस्थितौ तत्र तत्पदव्यक्तेस्तात्पर्याग्रहाच्छाब्दबोधानुपपत्तिरिति तस्या वृत्तित्वमावश्यकम्। न च तात्पर्यग्रहार्थं लक्षणाऽधीनोपस्थितेरपेक्षितत्वेऽपि तदधीनोपस्थितित्वेन शाब्दधीहेतुत्वे मानाभावात्तस्या वृत्तित्वासिद्धिः; लक्षणास्थले तात्पर्यात्मकसंकेताधीनोपस्थितित एव शाब्दबोधनिर्वाहादाधुनिकसंकेते तात्पर्याधीनोपस्थितेः शाब्दबोधप्रयोजकतायाः क्लृप्तत्वादिति वाच्यम्। लक्षणाऽधीनपदार्थोपस्थितिसत्त्वे मुख्यार्थबाधादिना तत्तदर्थे तत्तत्पदव्यक्तेस्तात्पर्यग्रहे उपस्थित्यन्तरमन्तरेणैव तत्तत्पदार्थानुभवस्य सर्वानुभवसिद्धत्वात्। आधुनिकसंकेतस्थले पूर्वसंकेतकर्तृपुरुषवाक्यादितोऽर्थविशेषे डित्थादिपदस्य संकेतग्रहात्तत्तत्पदेनार्थविशेषोपस्थितेः प्रकरणादिना तत्तत्पदव्यक्तेस्तत्र तात्पर्यग्रहे सति शाब्दबोधस्य वृत्त्यन्तराधीनोपस्थितिमन्तरेणैवोत्पत्त्या आधुनिकसंकेतस्य वृत्तित्वमपीति चेत्" का 2. "तत्पुरुष" इत्यादिना "निर्वाह इति चेत्" इतिपर्यन्तं कुण्डलितम्। तद्बिना च "तथा च लक्षणाया" इत्यादि पठ्यते मं.

[2] पदे च ग.

[3] "तथा च लक्षणायाः वृत्तित्वानभ्युपगमे गङ्गादिपदात्तीरादिरूपार्थानुपस्थितौ तत्र तत्पदव्यक्तेस्तात्पर्याग्रहाच्छाब्दबोधानुपपत्तिरिति तद्वृत्तित्वमावश्यकम्। न च तात्पर्यग्रहार्थं लक्षणाऽधीनोपस्थितेरपेक्षितत्वेऽपि तदधीनोपस्थितित्वेन शाब्दधीहेतुत्वे मानाभावात्तस्या वृत्तित्वासिद्धिः; लक्षणास्थले तात्पर्यात्मकसंकेताधीनोपस्थितित एव शाब्दबोधनिर्वाहात्, आधुनिकसंकेतस्थले तात्पर्याधीनोपस्थितेः शाब्दबोधप्रयोजकतायाः क्लृप्तत्वादिति वाच्यम्। लक्षणाऽधीनपदार्थोपस्थितिसत्त्वे मुख्यार्थबाधादिना तत्तदर्थे तत्तत्पदव्यक्तेस्तात्पर्यग्रहे उपस्थित्यन्तरमन्तरेणैव तत्तत्पदार्थानुभवस्य सर्वानुभवसिद्धत्वात्। आधुनिकसंकेतस्थले च पूर्वं संकेतकर्तृपुरुषवाक्यतोऽर्थविशेषे डित्थादिपदस्य संकेतग्रहात्तत्तत्पदेनार्थविशेषोपस्थितौ प्रकरणादिना तत्तत्पदव्यक्तेस्तत्र तात्पर्यग्रहे सति शाब्दबोधस्य वृत्त्यन्तराधीनोपस्थितिमन्तरेणैवोत्पत्त्या आधुनिकसंकेतस्य वृत्तित्वमिति चेत्" अ. ग. तत्पुरुषसंकेतित इत्यादि नास्ति। किन्तु इदमेव वर्तते का2.

[4] संबन्धत्वे का.ग.

[5] संभवतीति ज. मातृकायां इत्यधिकम्।



[6] अपि. अ.ग.

**इच्छाविषयत्वस्य सम्बन्धत्वमक्लृप्तम् इति मीमांसकमतोपसंहारः**

यत्तु "स्वजन्यबोधविषयत्वप्रकारकेच्छाविषयत्व[1]मर्थे पदस्य[2] सम्बन्धः, पदे चार्थस्य विपरीतः, अस्य सम्बन्धत्वमन्यथाऽनुपपत्त्या कल्प्यते। एतादृश परम्पराया अपभ्रंश[3]स्थले सम्बन्धता न[4] स्वीक्रियते। अतः[5] तत्र तत्सम्बन्धावगाहिज्ञानं भ्रम एव" इति[6],

तदपि तुच्छम्। अक्लृप्तस्य[7] तादृशेच्छाविषयत्वस्य सम्बन्धतोपगमे तादृशज्ञानविषयत्व-ज्ञानसमानकालिकस्व[8]विषयत्वादिपरम्पराया अपि विनिगमनाविरहेण सम्बन्धताप्रसङ्गात्। तस्मात्पदपदार्थयोः सम्बन्धान्तरमेव वाच्यवाचकभाव इति वदन्ति।

**ज्ञाने पदानां शक्तिरिति मीमांसकमतविशेषोपन्यासः**

यस्तु—

ज्ञाने पदानां शक्तिः, न त्वर्थे[9]। तथा च[10] तज्ज्ञानशक्तत्वं तद्वाचकत्वम्। तच्च तद्विषयकशाब्दधीजनकतावच्छेदकधर्मवत्त्वम्। स च धर्मो वह्न्यादिनिष्ठ दाहानुकूला शक्तिरिव[11] पदार्थान्तरमेव। लाक्षणिकं नानुभावक[12]मेवेति न तत्र शक्तिः। घटादिपदस्य मिति-मातृ-समभिव्याहृतपदार्थान्तरविषयक

---

[1] विशेष्यत्वम् ग.

[2] पद ग.

[3] अपभ्रंशादि ग.

[4] न सम्बन्धता ग.

[5] ना.ग.

[6] संप्रदाय इति अ.ग.

[7] कंसे स्थापितम् ग.

[8] ज. स्वसमानकालीनज्ञान का. स्वसमानकालीनज्ञान ग. समानकालीनज्ञान मं.

[9] इदं वाक्यं ना.मं.

[10] "ज्ञाने" इत्यारभ्य "तथा च" इतिपर्यन्तं कंसे ग.

[11] दाहानुकूलशक्तिवत् ग.



[12] चाननुभावकम् ग.

ज्ञान[1]जनकत्वेऽपि न तद्वाचकत्वम्[2]। तद्विषयकत्वावच्छिन्नज्ञानशक्तपदस्यैव तद्वाचकत्वात्। मितिमातृविषयकत्वेन च ज्ञानस्य न किंचित्पदशक्यता, ज्ञानसामान्यसामग्र्या एव मितिमातृभासकतया, पदान्तरस्य च[3] तदर्थभासकतया तद्विषयकत्वस्य [4]तत्पदजन्यताऽवच्छेदकत्वे मानाभावात्।

कार्यान्वितस्वार्थे पदानां शक्तिरिति वादिनां गुरूणां साक्षात्परम्परा-साधारणकार्यत्वविषयतानिरूपितत्वेन घटादिविषयकताया घटादि पद[5]जन्यताऽवच्छेदकत्वेऽपि न घटादिपदस्य कार्यतावाचकत्वम्[6], अपि तु लिङादिपदस्यैव, तद्विषयकत्वावच्छिन्नेत्यत्र साक्षात्परम्परासाधारणनिरूपितत्वांशे विशेषणतया[7]ऽवच्छेदकत्वस्यैव निवेशात्।[8]

न च कार्यानुकूलशक्तेः स्वरूपसत्या एव कार्यानुकूलतया पदार्थोपस्थितौ शाब्दबोधे च ज्ञातोपयोगिनोऽर्थे पदस्य वृत्तिरूपशक्त्यन्तरस्य[9] स्वीकार आवश्यक इति वाच्यम्।

---

[1] ज. मितिमातृधी का. मितिमातृविषयकधी ग. मितिमातृमभिव्याहृतपदार्थान्तरविषयकज्ञान कुण्डलितं, मितिमातृधी मं.

[2] "यज्ज्ञानशक्तत्वेन पदज्ञानस्य शाब्दबोधजनकता, तस्यैव वाच्यत्वात्। एतेन कार्यान्वितज्ञानजनकतया सर्वेषामेव कार्यान्वितवाचकत्वापत्तिरित्यपि निरस्तम्। कार्यान्वितघटज्ञाने शक्तम् इत्येतादृशज्ञानत्वेन घटोपस्थित्यहेतुत्वात्। इति मीमांसकमतविशेषः। घटादिपदस्य मिति-मातृ-समभिव्याहृत पदान्तरार्थविषयक धीजनकत्वेऽपि न तद्वाचकत्वम्" **अ.ग.। इदं तु सर्वथा असंगतमेव**।

[3] ना.ग.

[4] एतत् ग.

[5] घटादि ज.

[6] कार्यतावच्छेदकत्वम् ज.

[7] निरूपितत्वाविशेषणतया ज. निरूपितत्वविशेषणतया ग. निरूपितत्वांशेऽविशेषणतया का.

[8] तत्र कार्यविषयताया निरूपकत्वांशे विशेषणत्वम्। वस्तुतस्तु विनिगमनाविरहेण सर्वासामेव विषयतानां साक्षात्परंपरासाधारणनिरूपितत्वविशेषणत्वेन तादृशनिरूपितत्वाविशेषण विषयताया अप्रसिद्धावपि कार्यत्वादिविषयतानिरूपितत्वेन यद्धर्मावच्छिन्नविषयिता कार्यतावच्छेदिका तद्धर्मावच्छिन्नवाचकतानियमात् इति। अ.ज.



[9] ग. शक्त्यन्तर का.ज.

दाह[1]कार्ये वह्न्यादिनिष्ठशक्तेः स्वरूपसत्या एवोपयोगित्वेऽपि शाब्दबोधानुकूलशक्तेः शाब्दबोधे पदार्थोपस्थितौ च ज्ञातोपयोगित्वोपगमे बाधकाभावात्।

अतीतानागतपदज्ञानादपि शाब्दबोधोत्पत्त्या पदानामहेतुत्वेन तत्र हेतुतावच्छेदकशक्त्यसम्भव इति तु न शङ्क्यम्। तन्मते पदानां नित्यत्वात्।

अस्तु वा तज्ज्ञाननिष्ठ[2]शक्त्या तद्वाचकत्वम् —

इति **मीमांसकमतविशेषः**,

## ज्ञानशक्तिवादनिरासः

न चासौ विचारसहः।[3] यतस्तन्मते लाक्षणिकस्याननुभावकत्वं दुर्घटमेव। पदार्थोपस्थितिद्वारा शक्यार्थानुभवे[4] शक्तस्येव लक्ष्यार्थानुभवे[5] लाक्षणिकस्यापि[6] हेतुताया दुर्वारत्वात्, [7]तत्रापि शक्तेरावश्यकतया वाचकताऽऽपत्तेः। पदार्थोपस्थित्याऽन्यथासिद्धत्वे शक्तस्यापि तथात्वापातात्।[8]

---

[1] दाहादि ग.का2.

[2] निष्ठ ना.का2.

[3] "यतस्तन्मते" ना.ग. "अतीतानागतपदज्ञानादपि शाब्दबोधोत्पत्त्या पदानाम् अहेतुत्वेन तत्र हेतुतावच्छेदकशक्त्यसंभवात्। अस्तु तज्ज्ञाननिष्ठशक्त्या तस्य वाचकत्वम्, तथापि" अ.ग. **इदमसंगतमेव**।

[4] ना.ग.

[5] बोधे अ.

[6] पदार्थोपस्थितिद्वारा शक्तस्येव तस्यापि ग.

[7] इदं वाक्यं ना.ग.

[8] लाक्षणिकस्याननुभावकत्वे 'धूमात्' इत्यादिवाक्यादन्वयानुपपत्तेः। तत्र धूमादिपदस्य ज्ञाने, विभक्तेः ज्ञाप्यत्वे लाक्षणिकत्वात्। एवं वाचकपदस्य सामान्यतः शक्तिमत्त्वेन शाब्दसामान्यहेतुत्वे घटादिपदशक्तेरपि पटादिबोधजनकतावच्छेदकतया तस्य तद्वाचकताप्रसङ्गः। तद्विषयशाब्दत्वावच्छिन्नं प्रति शक्तिविशेषपुरस्कारेण तद्वाचकपदस्य न हेतुतासंभवः। लक्षणाजन्यतद्विषयके व्यभिचारात्। न च तद्विधेयकशाब्दत्वं जन्यतावच्छेदकम्। लक्ष्यार्थश्च न विधेयतया भासते। अत एव न विधौ परः शब्दार्थ इति प्रवादोपि संगच्छते इति वाच्यम्। अयं नील इत्यादौ लक्षणया नीलादिपदोपस्थाप्यधर्मिणो विधेयतयानुभवात्। [illegible] लक्षणाजन्यतद्विधेयकशाब्दबोधे व्यभिचाराच्च। न चासौ विचारसहः। यतस्तन्मते लाक्षणिकस्यानुभावकत्वं दुर्घटम्। पदार्थोपस्थितिद्वारा

न चानुभावकताऽवच्छेदकशक्त्यभावाल्लाक्षणिकस्य नानुभावकत्वसम्भवः, [1]तैर्वाक्यार्थघटकार्था-न्तरवाचकमेव पदं स्वार्थस्येव तदन्वयप्रतियोगि लक्ष्यार्थस्याप्यनुभावकमुपेयत इति वाच्यम्।

एवं सति "गङ्गायां घोष" इत्यादौ घोषादिपदस्यापि[2] गङ्गातीरादिरूपार्थानुभावकताऽवच्छेदकशक्तिमत्त्वेन तद्वाचकताऽऽपत्तेः।

लाक्षणिकस्याननुभावकत्वे शक्तपदाघटित"धूमात्"इतिहेतुवाक्यादन्वयानुपपत्तेश्च[3]। तत्र धूमादिपदस्य ज्ञाने, विभक्तेश्च[4] ज्ञाप्यत्वे लाक्षणिकत्वात्।

अथ लक्ष्यार्थस्य न शाब्दबोधे प्रवेशः, अपि तु स्मृतस्य तस्य समभिव्याहृतपदार्थै[5]रसंसर्गाग्रहमात्रं, तथा च नानुपपत्तिः।

न च लक्ष्यार्थस्य[6] शाब्दबोधविषयत्वानुपगमे तदुपरागेण "शृणोमि" इत्यनुव्यवसायानुपपत्तिरिति वाच्यम्।

इष्टत्वात्। विधेयोपरागेणैव तथाप्रत्ययात्। लक्ष्यार्थस्य शाब्दबोधविषयत्वेऽपि तस्य विधेयतया भानानभ्युपगमात्। "विधौ न परः शब्दार्थः" इति सिद्धान्तादिति चेत्,

न। "मञ्चाः क्रोशन्ति" इत्यादौ लक्ष्यार्थमञ्चस्थपुरुषादेः शाब्दबोधविषयताया आवश्यकत्वात्। अन्यथा पूर्वाननुभूतस्य पुरुषादेः प्रतीत्यनिर्वाहात्। अननुभूतस्य स्मरणासम्भवात्। समानप्रकारकत्वमात्रेण शाब्दबोधपदार्थोपस्थित्यादेः कार्यकारणभावमुप[7]गच्छतां मीमांसकानां शाब्दबोधे

---

शक्यार्थानुभवे शक्तस्येव लक्ष्यार्थबोधे लाक्षणिकस्यापि हेतुताया दुर्वारत्वात्, तत्रापि शक्तेरावश्यकतया वाचकतापत्तेः। पदार्थोपस्थित्यान्यथासिद्धत्वे शक्तस्यापि तथात्वापातात्। **अ.ग. इदससंगतमेव।**

[1] इति अ.ज. ग. तैः ना.ग.

[2] अपि ना.ग.

[3] दन्वयानुपपत्तेश्च इति सर्वत्र। परन्तु अन्वयबोधानुपपत्तेश्च इति स्यात्।

[4] च ना.ग.

[5] पदार्थै ग.

[6] अपि अ.ज. 

[7] अभ्युप ग.

योग्यताबलेनापूर्वार्थस्य भानेन[1] लक्ष्यार्थस्य शाब्दानुभवोपगमे[2]ऽपूर्वस्यापि तस्य प्रतीत्युपपत्तिरिति[3] तद्विषयकशाब्दत्वावच्छिन्नं प्रति शक्तिविशेषपुरस्कारेण तद्वाचकपदस्य तज्ज्ञानस्य वा न हेतुतासम्भवः[4]। अपभ्रंशादौ शक्तत्वभ्रमजन्यतद्विषयकशाब्दबोधे व्यभिचारात्[5]।

विशिष्य तत्तत्पदार्थान्विततत्तदर्थबोधे तत्तत्पदसाकाङ्क्षतत्तत्पदज्ञानत्वेन अवश्यक्लृप्त-कारणतयैवोपपत्तावीदृशकार्यकारणभावस्य निर्युक्तिकत्वाच्च[6]।

## न्यायमतेन समाधानम्

### लक्षणास्थले विशकलितेश्वरेच्छाकल्पनेऽनुपपत्तिपरिहारः (गदाधरपक्षः)

इदं तु तत्त्वम् — तीरादौ गङ्गादिपदजन्यबोधविषयतासत्त्वेऽपि तदंशे शुद्ध[7]विषयत्वत्वादिनैव तादृशविषयत्वादिप्रकारकत्वमीश्वरेच्छाया[8]मुपगम्यते; न तु गङ्गादिपदजन्यबोधविषयत्वत्वादिनाऽपि तत्प्रकारकत्वम्, मानाभावात्, तदनभ्युपगमेऽपि तस्याः सर्वविषयकत्वाव्याघातात्[9]।

न च तथा सति बोधांशे गङ्गादि[10]पदजन्यताऽनवगाहितया सर्वविषयकत्वानुपपत्तिरिति वाच्यम्।

तीरादिनिष्ठविशेष्यतानिरूपितप्रकारताऽवच्छेदकघटकतया तदनवगाहित्वेऽपि बोधांशे स्वातन्त्र्येण तदवगाहित्वोपगमात्। तथा च तत्पदजन्य बोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन ईश्वरेच्छावत्त्वस्य

---

1 अपूर्वभानेन ज.

2 शाब्दानुपगमे इति का. पुस्तकयोः गलितम्।

3 लक्ष्यार्थस्य शाब्दबोधानुभवोपगमेऽपूर्वस्य तस्य प्रतीत्यनुपपत्तिविरहादिति ज.

4 हेतुत्वकल्पनाऽसम्भवः ज.

5 ज. इदं वाक्यं नास्ति का. ग.

6 ज.ग. कत्वात् का.

7 का1. बोध अ.ग.का2.

8 इच्छाया ग.

9 का1. व्याघाताभावात् का2.ग.



10 गङ्गा का.

ईश्वरेच्छा[1]निरूपिततादृशविशेष्यतावत्त्वस्य वा तत्पदशक्यतारूपतया नातिप्रसङ्गः। उक्तरीत्यैव च घटादिपदजन्यबोधविषयस्य घटान्वितकर्मत्वानयनादे[2]र्घटादिसंसर्गस्य च[3] तादृशबोधविषयत्वप्रकारकेच्छाविषयत्वेऽपि घटादिपदा[4]वाच्यत्वमुपपादनीयम्।।

## अन्विताभिधानवादरीत्या संसर्गे शक्तिरिति पूर्वपक्षः

**अन्विताभिधानवादिनस्तु** — पदार्थसंसर्गस्यापि वाच्यतां स्वीकुर्वन्ति। तन्मते "इतरान्वितघटो घटपदशक्यः" इत्येतादृशमेव शक्तिज्ञानं शाब्दबोधप्रयोजकम्[5]। "घटो घटपदशक्यः" इत्याकारकान्वयांशानन्तर्भावेण शक्तिग्रहस्य तथात्वे च[6] वृत्तिग्रहाविषयतया पदार्थसंसर्गस्य शाब्दबोधविषयताऽनुपपत्तेः।

न चेतरान्वितघटस्य वाक्यप्रतिपाद्यतया शाब्दबोधात् प्राक् शक्तिग्रह एव दुर्घटः, अनुपस्थितत्वादिति वाच्यम्।

विशेषतः पदार्थान्तरघटितस्य तदन्वितघटादिरूपवाक्यार्थस्य प्रागनुपस्थितत्वे[7]ऽपीतरपदार्थत्वादिना सामान्यधर्मप्रकारेण[8] तद्घटितस्य तदन्वितघटादेः प्रागुपस्थितिसम्भवेन तत्र शक्तिग्रहस्य सुघटत्वात्।

वस्तुतस्तु पदार्थान्तरमनन्तर्भाव्य केवलान्वयांशान्तर्भावेण[9] शक्तिग्रहस्य शाब्दबोधप्रयोजकता उपेया[10], पदार्थान्तरस्य पदान्तरलभ्यतया तदंशान्तर्भावेण शक्तिग्रहस्यानुपयुक्तत्वात्।

---

[1] का. इच्छा ग.

[2] ज.ग. कर्मत्वान्वितानयनादेः का.

[3] च इति संगतं नास्ति। वा इति स्यात्। गर्शीमरोपयुक्त D2 मातृकायां "न्व" इवैतद्भाति।

[4] पदानां वाच्यत्व ज. अशुद्धम्।

[5] इदं तु समीचीनं न भाति। अन्विताभिधानवादिभिः सामान्यत एव तस्य स्वीकारेण सामान्यान्विताभिधाने च इतरान्वितघटो घटपदशक्य अन्वितघटो घटपदवाच्य इति वा शक्तिग्रहाभावात्। द्र0 मदीयव्युत्पत्तिवादविमर्शे अन्विताभिधानविचारः. वी.पां.

[6] ना.ग.

[7] नुपस्थितौ का2. ग.

[8] इतरपदार्थत्वादिसामान्यधर्मपुरस्कारेण ग.

[9] एव अ.ग.

[10] उपेयते का2.

न चान्वयांशस्य पदवाच्यत्वे[1], तदंशे शक्तिग्रहस्य शाब्दबोधोपयोगित्वे च मानाभाव इति वाच्यम्।

तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितिहेतुतायाः सामान्यत एव क्लृप्ततया वृत्तिज्ञानादनुपस्थितौ तस्य शाब्दबोधविषयत्वासम्भवात्, अन्वयांशे शक्तिज्ञानस्यापि[2] शाब्दबोधे अवश्यापेक्षणीयत्वात्, संसर्गताभिन्न विषयतायास्तादृशोपस्थितिजन्यताऽवच्छेदकत्वे गौरवात्।

## अन्वयांशे न शक्तिरिति न्यायमतसिद्धान्तः

अत्राहुः[3] — सामान्यतस्तद्विषयकशाब्दबोधे तादृशवृत्तिज्ञान जन्यतदुपस्थितित्वेन न हेतुता, स्वतन्त्रवृत्तिज्ञानात् विश्रृङ्खलभावेनैकपदो[4]पस्थितयोः पदार्थपदार्थतावच्छेदकीभूतयोः पदार्थतत्त्वावच्छेदकयोः [5]विशेष्य-विशेषणभावेन[6] शाब्दबोधापत्तेः। किन्तु तद्धर्मप्रकारेण तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्य तद्धर्मावच्छिन्नतद्विषयकोपस्थितित्वेनैव हेतुता वाच्या। एवं च तत्संसर्गकबोधस्य किञ्चिद्धर्मप्रकारेण तद्विषयकत्वाभावात् वृत्तिज्ञानात्तदनुपस्थितावपि तत्संसर्गकशाब्दबोधः सम्भवत्येव। [7]शाब्दबोधे संसर्गविषयताया आकाङ्क्षाप्रयोज्यत्वात्।

### शक्त्यभावेऽपि अन्वयबोधप्रतिपादनेन अन्विताभिधानवादनिरासः

[[8]वस्तुतस्तु शक्त्या लक्षणया वोपस्थितस्य तत्तदर्थस्य शाब्दबोधे भानादुभयविधतत्तदर्थोपस्थितेरेव तद्विषयकशाब्दबोधे हेतुता वाच्या।

---

[1] चान्वयस्य पदवाच्यत्वेपि ज.

[2] शक्तिग्रहस्य का 2.

[3] अत्र वदन्ति का.ग.

[4] नैकपदो का.ग. नैकहर्यादिपदो ज.

[5] का.ग. इन्द्राश्वयोः ज.

[6] भावक्रमेण का.ग.

[7] ज. इदं नास्ति का.ग.

[8] एवं पदार्थान्तरधर्मिकवृत्तिज्ञानजन्यस्मृतौ उद्बोधकान्तरवशात् यत्र भानं, तस्यापि शाब्दबोधवारणाय पदार्थतावच्छेदकेन समम् इतरान्वयबोधवारणाय च

**तादृशोपस्थित्योश्चानुगताननतिप्रसक्तस्य कारणताऽवच्छेदकस्यागुरोर्दुर्वचतया व्यभिचारवारणाय शक्त्यादिज्ञानजन्योपस्थिति[1]जन्यताऽवच्छेदककोटौ तत्तत्कारणाव्यवहितोतरत्वनिवेश आवश्यकः।**

**इत्थं च वृत्त्यनुपस्थितस्यापि संसर्गस्य शाब्दबोधोपगमे व्यभिचाराप्रसक्त्या[2] न किञ्चिद्बाधकमिति किं तत्र वृत्तिकल्पनेन?**[3]]

---

तद्धर्मावच्छिन्नविषयकशाब्दबोधे तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मावच्छिन्नोपस्थितित्वेनैव हेतुता वाच्या। एवं च पदार्थतावच्छेदक-तत्संसर्गयोः स्वविशेष्यकवृत्तिज्ञानानुपस्थितयोरपि शाब्दबोधविषयत्वेन विधेयताख्यविलक्षणविषयता एव व्यभिचारवारणय कार्यतावच्छेदककोटौ निवेशनीया। अ.ग.

[1] स्थितेः का.2.ग.

[2] अन्वयस्य पदावाच्यत्वेऽपि इत्यधिकं का 2. इत्थं च वृत्त्यनुपस्थितस्यापि संसर्गविधया भाने ग.

[3] अत्र क्रोडपत्रांशः अधिकः का1.पुस्तके मुद्रितः। का2 पुस्तके वस्तुतस्तु इत्यतः पूर्वमेव क्रोडपत्रम्। गपुस्तके तु "पदार्थद्वयसंसर्गस्त्वाकाङ्क्षाबललभ्य एवेति स्थितम्" इत्यतःपरम्। जपुस्तके नास्त्येव। मूलान्तर्गतं क्रोडपत्रं मं.

**क्रोडपत्रम्**

**(अनुगमपूर्वपक्षः)**

([एवं तद्विषयकशाब्दबोधे तच्छक्तपदज्ञानजन्यतदुपस्थिति-तल्लाक्षणिक पदज्ञानजन्यतदुपस्थित्योर्द्वयोरेव हेतुतया तयोः परस्परजन्यबोधे व्यभिचारस्य वारणाय तत्तत्कारणानन्तर्यस्य तत्तत्कारणजन्यतावच्छेदकप्रवेशध्रौव्येण पदार्थद्वयसंसर्गावगाहिबोध वृत्तिज्ञानजन्यतदुपस्थितेर्व्यभिचाराप्रसक्त्या अन्वयस्य पदवाच्यत्वमप्रामाणिकम्।]

न च शक्तिलक्षणयोर्वृत्तित्वेनानुगमसंभवात्तदुभयविषयज्ञानजन्योपस्थित्योरेकरूपेणैव हेतुतया नोक्तव्यभिचारप्रसक्तिरिति वाच्यम्। उभयसाधारणवृत्तित्वस्यानुगतस्य दुर्वचत्वात्।)

**{अ.का2. पुस्तके। ( ) एतच्चिह्नान्तर्गतः पाठः प्राचीनपुस्तकेषु नोपलभ्यते। [ ] अनयोरन्तर्गतः पाठस्तु टीकाकृता पौनरुक्त्या नानुमन्यते इति क्रोडपत्रटीकासमाप्तिलेखात्सुव्यक्तम्.गो.दा.}**

यत्तु शक्तिविषयकज्ञानजन्यतदुपस्थितित्वेनैव शक्तिलक्षणाधीनपदार्थोपस्थित्योरनुगमसम्भवः। घटशक्तं घटपदमित्येतादृश शक्तिज्ञानजन्योपस्थितेरिव घटसम्बन्धिशक्तं पटपदमित्यादिलक्षणाज्ञानजन्योपस्थितेरपि घटादिसम्बन्धिपटादिनिष्ठशक्तिविषयकज्ञानजन्यत्वादिति सोऽपि व्यभिचारप्रसक्तिरिति। न  च प(घ)टशक्तं Iप(घ)टपदमित्यादिज्ञानजन्यपटाद्युपस्थितौ यत्रोद्बोधकान्तरात्

घ(प)टादिभानं तादृशघ(प)टादिविषयकोपस्थितेरपि घटादिशाब्दबोधजनकत्वापत्तिरिति तद्विषयकशाब्दबोधे तदर्थविशेषितशक्तिविशिष्टपदविषयकज्ञानजन्यतदुपस्थितित्वेन हेतुता वाच्या; तथा च न तेन रूपेण घटसंबन्धिशक्तं पटपदमित्यादिज्ञानजन्यघटाद्युपस्थितेः सङ्ग्रह इत्युक्तव्यभिचारो दुर्वार एवेति वाच्यम्। शक्तिविषयताऽवच्छिन्नकारणता प्रतियोगिकतद्विषयताऽवच्छिन्नकार्यताशालित्वेनोपस्थितेस्तच्छाब्दबोधहेतुतया दर्शितोद्बोधकान्तरप्रयोज्यघटादिविषयताकोपस्थितेर्निरुक्तकार्यताशालित्वविरहेणोक्तातिप्रसङ्गानवकाशात्। तदर्थविशेषित-शक्तिविषयतापर्यन्तस्योपस्थितिनिष्ठ कारणताऽवच्छेदकेऽनिवेशादनुगमसम्भवादुक्तलक्षणाज्ञानहेतुतायामपि शक्तिविषयताया अवच्छेदकत्वेन प्रवेशादिति।

**तन्निरासः**

तन्न समीचीनम्। उक्तानुगतरूपेण पदार्थोपस्थितेर्हेतुत्वे 'घटकालीना या शक्तिस्तद्वत्पटपदम्'इत्यादिज्ञानजन्यघटाद्युपस्थितितोऽपि घटादिशाब्दबोधप्रसङ्गात्। तत्कालीनशक्तिरूपपरम्परा-सम्बन्धविषयताऽन्तःपातिन्याः शक्तिविषयताया अपि तादृशसम्बन्धप्रयोज्यघटादिविषयताप्रयोजकत्वात्। तादृशशक्तिविषयकधियश्च (धियः) घटादिनिरूपितत्वेन तत्सम्बन्धिनिरूपितत्वोपरागेण च पदे शक्त्यनवगाहितया शाब्दबोधप्रयोजकतच्छक्तपदज्ञानतल्लाक्षणिकपदज्ञानानात्मकतया तज्जन्योपस्थितेः शाब्दबोधजनकत्वे इष्टापत्त्यसम्भवात् (तज्जन्योपस्थितेः शाब्दबोधजनकत्वासम्भवात्।)। न च किञ्चिन्निरूपितत्वोपरक्तशक्तिविषयताप्रयोज्यतत्तदर्थविषयताकोपस्थितित्वेन शाब्दधीप्रयोजकत्वोपगमान्नायमतिप्रसङ्गः, उक्तज्ञानीयशक्तिविषयतायाः किञ्चिन्निरूपितत्वविषयतानिरूपितत्वविरहादिति वाच्यम्। एवमपि घटकालीना या पटनिरूपिता शक्तिस्तद्वत्पटपदमितिज्ञानजन्यघटाद्युपस्थितेरव्यावृत्तेः।

अथ किञ्चिन्निरूपितत्वेन (किंचिन्निरूपितविषयतानिरूपितत्वेन) शक्तिविषयता यादृशकारणतावच्छेदिका तादृशकारणताप्रतियोगिक प्रकृतार्थविषयताऽवच्छिन्न कार्यताशालित्वेनोपस्थितेर्हेतुत्वोपगमान्नायमतिप्रसङ्गः। शक्त्यंशे उदासीनस्य पटनिरूपितत्वादेः (पटीयत्वादेः) भानेऽपि घटकालीनशक्तिरूपघटीय परम्परासम्बन्ध विषयकपदज्ञानस्य घटादिस्मारकतया तत्स्मृतिजनकतायां पटादिनिरूपितत्वविषयता निरूपितत्वस्य शक्तिविषयकत्वे अनिवेशादिति चेत्;

एवमपि (एवं सति) यत्र घटादेः शक्तत्वसम्बन्धेन पदांशे प्रकारता तज्जन्योपस्थितितोऽपि घटादेः शाब्दबोधोत्पत्त्या तदनुपपत्तिर्दुर्वारैव। तत्र पदांशेऽर्थसंसर्गतया भासमान(भाने ग.)शक्तावर्थस्य निरूपितत्वरूपसम्बन्धान्तराभानात्।



वस्तुतो घटत्वाद्युपलक्षित[illegible] घटत्वादिप्रकारक शाब्दबोधवारणाय तद्धर्मप्रकारकशाब्दबोधे शक्तौ तद्धर्मविशिष्टनिरूपितत्वावगाहित्वेन

**[ [क्रोडपत्रम्**

**अनुगमपूर्वपक्षः**

[1]([एवं तद्विषयकशाब्दबोधे तच्छक्तपदज्ञानजन्यतदुपस्थिति-तल्लाक्षणिकपदज्ञानजन्यतदुपस्थित्योर्द्वयोरेव हेतुतया तयोः परस्परजन्यबोधे व्यभिचारस्य वारणाय तत्तत्कारणानन्तर्यस्य तत्तत्कारणजन्यतावच्छेदक प्रवेशध्रौव्येण पदार्थद्वयसंसर्गावगाहिबोधे वृत्तिज्ञानजन्यतदुपस्थिते र्व्यभिचाराप्रसक्त्या अन्वयस्य पदवाच्यत्वमप्रामाणिकम्।]

न च शक्तिलक्षणयोर्वृत्तित्वेनानुगमसंभवात्तदुभयविषयज्ञान जन्योपस्थित्योरेकरूपेणैव हेतुतया नोक्तव्यभिचारप्रसक्तिरिति वाच्यम्। उभयसाधारणवृत्तित्वस्यानुगतस्य दुर्वचत्वात्।)

यत्तु शक्तिविषयकज्ञानजन्यतदुपस्थितित्वेनैव शक्तिलक्षणाधीनपदार्थोपस्थित्योरनुगमसम्भवः। घटशक्तं

---

शक्तिज्ञानस्योपयोगिता वाच्या; तथा च तत्सम्बन्धिशक्तत्वावगाहिनो लक्षणाग्रहस्य तेन रूपेणासङ्ग्रहादननुगमेन व्यभिचारप्रसक्त्योक्तकार्यकारणभावे कारणानन्तर्यप्रवेश आवश्यकः।

एवं शक्तिज्ञानमुभयविधं विनिगमनाविरहाच्छाब्दबोधप्रयोजकं, पदेऽर्थवाचकत्वावगाहि; अर्थे पदवाच्यत्वावगाहि च, तयोरपि नानुगमसम्भवः। वाच्यत्ववाचकत्वयोः शक्तिप्रतियोगित्व-शक्त्याश्रयत्वरूप(शक्तिप्रतियोगिक)मिथोविलक्षण सम्बन्धरूपतया अनुगतानतिप्रसक्तरूपाभावात्। सम्बन्धत्वादिनाऽनुगमे तदीयकालिकादि सम्बन्धज्ञानादर्थधर्मिकपदवाचकतायाः पदधर्मिकार्थवाच्यतायाश्च ज्ञानाच्छाब्दबोधापत्तेः। तज्जन्योपस्थित्योरपि परस्परजन्यबोधे व्यभिचारः।

एवं लक्षणाज्ञानमपि पदेऽर्थसम्बन्धिवाचकताऽवगाहितया, अर्थे पदवाच्यसम्बन्धिताऽवगाहितया च, द्विविधं शाब्दबोधप्रयोजकम्। तदधीनोपस्थित्यो रप्यनतिप्रसक्तरूपेणानुगमासम्भवेन परस्परजन्यबोधे व्यभिचार इति कार्यताऽवच्छेदकगर्भे तत्तत्कारणानन्तर्यप्रवेशो ध्रुव इत्यवधेयम्। **इति क्रोडपत्रम्।**

(क्रोडपत्रे कंसान्तर्गतः पाठः गपाठीयः वी.पां.)

"क्रोडपत्रमेतन्माधव्यामंशतोपि न विवृतम्। मञ्जूषाकृतापि तथैवाचरितम्, केवलमवसाने अस्यावतरणद्वयमसूचि। क्रोडपत्रारम्भे न चेत्यादिर्दुर्वचत्वादित्यन्तो ग्रन्थो न मूलघटको नापि क्रोडपत्रीयः पौनरुक्त्यादिति मन्यमानेन हरिनाथतर्कसिद्धान्तेन पर्यत्याज्येव। त्यागप्रयोजकपौनरुक्त्यासत्त्वात् प्राचीनलिखितपुस्तकेषूपलभ्यमानत्वात् पूर्वापरसंदर्भानुगुणत्वाच्चोपादेयतामर्हति पाठोयमिति यथास्थानं निवेशितमस्माभिः" इति **दामोदरलालगोस्वामिभि**र्लिखितम्।

[1] {अ.का2. पुस्तके। ( ) एतच्चिह्नान्तर्गतः पाठः प्राचीनपुस्तकेषु नोपलभ्यते। [ ] अनयोरन्तर्गतः पाठस्तु टीकाकृता पौनरुक्त्या नानुमन्यते इति क्रोडपत्रटीकासमाप्तिलेखात्सुव्यक्तम्.गो.दा.}

घटपदमित्येतादृशशक्तिज्ञानजन्योपस्थितेरिव घटसम्बन्धिशक्तं पटपदमित्यादि लक्षणाज्ञानजन्योपस्थितेरपि घटादिसम्बन्धिपटादिनिरूपितशक्तिविषयक ज्ञानजन्यत्वादिति नोक्तव्यभिचारप्रसक्तिरिति। न च घटशक्तं घटपदमित्यादि ज्ञानजन्यघटाद्युपस्थितौ यत्रोद्बोधकान्तरात् पटादिभानं तादृशपटादि विषयकोपस्थितेरपि घटादिशाब्दबोधजनकत्वापत्तिरिति तद्विषयकशाब्दबोधे तदर्थविशेषितशक्तिविशिष्टपदविषयकज्ञानजन्यतदुपस्थितित्वेन हेतुता वाच्या; तथा च न तेन रूपेण घटसंबन्धिशक्तं पटपदमित्यादिज्ञानजन्यघटाद्युपस्थितेः सङ्ग्रह इत्युक्तव्यभिचारो दुर्वार एवेति वाच्यम्। शक्तिविषयताऽवच्छिन्न कारणताप्रतियोगिकतद्विषयताऽवच्छिन्नकार्यताशालित्वेनोपस्थितेस्तच्छाब्दबोधहेतुत या दर्शितोद्बोधकान्तरप्रयोज्य घटादिविषयताकोपस्थितेर्निरुक्तकार्यता शालित्वविरहेणोक्तातिप्रसङ्गानवकाशात्। तदर्थविशेषित-शक्तिविषयता पर्यन्तस्योपस्थितिनिष्ठकारणताऽवच्छेदकेऽनिवेशादनुगमसम्भवादुक्तलक्षणाज्ञानहेतु तायामपि शक्तिविषयताया अवच्छेदकत्वेन प्रवेशादिति।

**तन्निरासः**

तन्न समीचीनम्। उक्तानुगतरूपेण पदार्थोपस्थितेर्हेतुत्वे 'घटकालीना या शक्तिस्तद्वत्पटपदम्'इत्यादिज्ञानजन्यघटाद्युपस्थितितोऽपि घटादिशाब्दबोधप्रसङ्गात्। तत्कालीनशक्तिरूपपरम्परा-सम्बन्धविषयताऽन्तः पातिन्याः शक्तिविषयताया अपि तादृशसम्बन्धप्रयोज्यघटादिविषयताप्रयोजकत्वात्। तादृशशक्तिविषयकधियः घटादिनिरूपितत्वेन तत्सम्बन्धिनिरूपितत्वोपरागेण च पदे शक्त्यनवगाहितया शाब्दबोधप्रयोजकतच्छक्तपदज्ञानतल्लाक्षणिक पदज्ञानानात्मकतया तज्जन्योपस्थितेः शाब्दबोधजनकत्वे इष्टापत्त्यसम्भवात् (तज्जन्योपस्थितेः शाब्दबोध जनकत्वासम्भवात्।))।

न च किञ्चिन्निरूपितत्वोपरक्त शक्तिविषयताप्रयोज्य तत्तदर्थविषयताकोपस्थितित्वेन शाब्दधीप्रयोजकत्वोपगमान्नायमतिप्रसङ्गः, उक्तज्ञानीयशक्तिविषयतायाः किञ्चिन्निरूपितत्वविषयतानिरूपितत्वविरहादिति वाच्यम्। एवमपि घटकालीना या पटनिरूपिता शक्तिस्तद्वत्पटपदमितिज्ञा नजन्यघटाद्युपस्थितेरव्यावृत्तेः।

अथ किञ्चिन्निरूपितत्वेन (किंचिन्निरूपितविषयतानिरूपितत्वेन) शक्तिविषयता यादृशकारणतावच्छेदिका तादृशकारणताप्रतियोगिक प्रकृतार्थविषयताऽवच्छिन्नकार्यताशालित्वेनोपस्थितेर्हेतुत्वोपगमान्नायमतिप्रसङ्गः। शक्त्यंशे उदासीनस्य पटनिरूपितत्वादेः (पटीयत्वादेः) भानेऽपि घटकालीनशक्तिरूपघटीयपरम्परासम्बन्धविषयकपदज्ञानस्य घटादिस्मारकतया तत्स्मृतिजनकतायां पटादिनिरूपितत्वविषयतानिरूपितत्वस्य शक्तिविषयकत्वे अनिवेशादिति चेत्,

एवमपि (एवं सति) यत्र घटादेः शक्तत्वसम्बन्धेन पदांशे प्रकारता तज्जन्योपस्थितितोऽपि घटादेः शाब्दबोधोत्पत्त्या तदनुपपत्तिर्दुर्वारैव। तत्र पदांशेऽर्थसंसर्गतया भासमान (भाने) शक्तावर्थस्य निरूपितत्वरूप सम्बन्धान्तराभानात्।

वस्तुतो घटत्वाद्युपलक्षितवाचकात् द्रव्यादिपदाच्छक्त्याऽभ्रान्तस्य घटत्वादिप्रकारकशाब्दबोधवारणाय तद्धर्मप्रकारकशाब्दबोधे शक्तौ तद्धर्मविशिष्टनिरूपितत्वावगाहित्वेन शक्तिज्ञानस्योपयोगिता वाच्या; तथा च तत्सम्बन्धिशक्तत्वावगाहिनो लक्षणाग्रहस्य तेन रूपेणासङ्ग्रहादननुगमेन व्यभिचारप्रसक्त्योक्तकार्यकारणभावे कारणानन्तर्यप्रवेश आवश्यकः।

एवं शक्तिज्ञानमुभयविधं विनिगमनाविरहाच्छाब्दबोधप्रयोजकं, पदेऽर्थवाचकत्वावगाहि; अर्थे पदवाच्यत्वावगाहि च, तयोरपि नानुगमसम्भवः। वाच्यत्व-वाचकत्वयोः शक्तिप्रतियोगित्व-शक्त्याश्रयत्वरूप (शक्तिप्रतियोगिक)मिथो विलक्षणसम्बन्धरूपतया अनुगताननतिप्रसक्तरूपाभावात्। सम्बन्धत्वादिनाऽनुगमे तदीयकालिकादिसम्बन्धज्ञानादर्थधर्मिकपदवाचकतायाः पदधर्मिकार्थवाच्यतायाश्च ज्ञानाच्छाब्दबोधापत्तेः। तज्जन्योपस्थित्योरपि परस्परजन्यबोधे व्यभिचारः।

एवं लक्षणाज्ञानमपि पदेऽर्थसम्बन्धिवाचकताऽवगाहितया, अर्थे पदवाच्यसम्बन्धिताऽवगाहितया च, द्विविधं शाब्दबोधप्रयोजकम्। तदधीनोपस्थित्योरप्यनतिप्रसक्तरूपेणानुगमासम्भवेन परस्परजन्यबोधे व्यभिचार इति कार्यताऽवच्छेदकगर्भे तत्तत्कारणानन्तर्यप्रवेशो ध्रुव इत्यवधेयम्। **इति क्रोडपत्रम्।]**

## शाब्दबोधे नियामकाभावे यावत्संसर्गभानापत्तिरिति पूर्वपक्षः तन्निरासश्च

अथ वृत्त्यनुपस्थितस्यापि पदार्थद्वयसंसर्गस्य शाब्दबोधविषयत्वोपगमे सम्बन्धभान[1]नियामकाभावात् सर्वत्राबाधितयावत्सम्बन्धभानापत्तिरिति चेत्;

न, कयोश्चित्पदयोः केनचिदेव[2] सम्बन्धेन स्वार्थान्वयबोधे[3] साकाङ्क्षतयाऽऽकाङ्क्षाज्ञानस्यैव पदार्थद्वयसंसर्गभाननियामकत्वात्। ययोश्च पदयोर्नानासम्बन्धेन स्वार्थान्वयबोधप्रकारकाकाङ्क्षा[4], तज्जन्यशाब्दबोधेपि[5]

---

[1] ज.भाने का.ग.

[2] ज.केनचित् का.ग.

[3] ज. एव का.ग.

[4] ज.बोधे आकाङ्क्षा का.ग.

[5] ज.बोधे का.ग.

संसर्गविशेषतात्पर्यज्ञानरूपकारणबलादेव संबन्धभाननियमोपपत्तेः। [1]अन्वयांशे शक्त्युपगमेऽप्येकैकस्यैव पदार्थस्य[2] संसर्गविधया क्वचित् कस्यचित् भानं, क्वचित् कस्यचिदभानम्[3] इत्यनियमेन सामान्यरूपेण कल्पनेनैव[4] अन्वयस्य शक्यकोटावन्तर्भावनीयतयोक्तस्यैव संसर्गभाननियामकत्वात्।

न च संसर्गविशेषानुपस्थितौ तात्पर्यज्ञानासम्भवेन तदुपस्थितेरावश्यकतया तद्गोचरसंस्कारोद्बोधार्थमेव तत्र वृत्तिज्ञानमपेक्षितमिति वाच्यम्।

उद्बोधकान्तरोपस्थितेपि[5] संसर्गे तात्पर्यग्रहसम्भवात्तत्र वृत्तिज्ञानस्यानपेक्षितत्वादिति[6]। तस्मात् घटत्वगोत्वादिविशिष्ट एव घटगवादिपदस्य शक्तिः; पदार्थद्वयसंसर्गस्त्वाकाङ्क्षाबललभ्य एवेति स्थितम्[7]।[8]

---

[1] वाक्यमिदं कुण्डलितं मं.

[2] का2.ग. पदार्थसंसर्गस्य का1.

[3] (इत्येककस्यैव संसर्गस्य भानम्) अ.ग.

[4] कल्पनेन ना. का.ग.

[5] ज.स्थितेऽपि का.ग.

[6] तत्वात् का.ग.

[7] हरिदासास्तु तत्पदबोध्यत्वप्रकारतानिरूपितविशेष्यतासंबन्धेन भगवदिच्छावत्त्वमेव तत्पदवाच्यत्वम्। गङ्गादिपदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यताया मुख्यार्थे प्रवाहादावेव ईश्वरेच्छासंबन्धत्वं न तीरादाविति न तीरादौ गङ्गापदवाच्यतापत्तिः। न च तीरादौ न तत्संबन्धत्वमित्यस्य न तीराद्यनुयोगिकसंबन्धत्वमर्थः। स च न संगच्छते। तादृशविशेष्यतायास्तीरादावपि सत्त्वात्तीरानुयोगिकत्वस्येश्वरेच्छाप्रतियोगिकत्वस्य तत्र सत्त्वादिति वाच्यम्। तीरादौ न तत्संबन्धत्वमित्यस्य न तीरानुयोगिकत्वावच्छेदेन तत्प्रतियोगिकत्वमित्यर्थकतया अनुपपत्तिविरहात्। यथा हि समवायैक्यमत एकस्मिन्नेव रूपप्रतियोगिकत्ववाय्वनुयोगिकत्वोभयसत्त्वेपि तन्निष्ठसामानाधिकरण्यमात्रं न त्ववच्छेद्यावच्छेदकभावाख्यसंबन्ध इति न वाय्वादेः रूपादिमत्त्वं, तथा गङ्गापदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यताया ईश्वरेच्छाप्रतियोगिकत्व-तीरानुयोगिकत्वोभयवत्त्वेपि न तयोरवच्छेद्यावच्छेदकभाव इति न तीरादेर्गङ्गापदवाच्यत्वम्। केचित्त्ववच्छेद्यावच्छेदकभावानङ्गीकारेपि वायुः रूपवानिति ज्ञानस्य भ्रमत्वमेव, रूपसमवायसत्त्वेपि रूपात्मकसंबन्ध्यसत्त्वात्, अत्रापि तादृग्विशेष्यतासत्त्वेपि पटपदादेर्घटादावभावेनापत्त्यभावात् तादृशसंबन्धेन पटपदवत्त्वमेव पटपदवाच्यत्वमित्याहुस्तच्चिन्त्यम्। क्वचिदयं पाठातिरेकः का1.

[8] अत्र क्रोडपत्रं गपाठे।

## घटादिपदानां घटत्वादिपदार्थतावच्छेदकविशिष्टे शक्तिप्रतिपादनम्

[1]घटादिपदस्य पदार्थताऽवच्छेदकीभूतघटत्वादिविशिष्ट एव शक्तिः, [2]न तु घटत्वोपलक्षिते; घटत्वादेरुपलक्षणत्वे तस्य द्रव्यत्व-कम्बुग्रीवादिमत्त्वाद्य[3]विशेषेण "घटादिपदात् द्रव्यत्वकम्बुग्रीवादि[4]मत्त्वादिना न बोधः, अपि तु घटत्वादिनैव" इति नियमानुपपत्तेः।

### विशिष्टे शक्तिरिति पक्षे जिज्ञासोत्थापनम्

अथ घटत्वादेरिव द्रव्यत्वादेरपि वैशिष्ट्यस्य घटादौ सत्त्वात् घटादिपदशक्तावपि घटत्वादिसामाना-धिकरण्यरूपवैशिष्ट्यवद्द्रव्यत्वादि वैशिष्ट्यस्याप्यक्षततया[5] घटत्वविशिष्टे शक्तिर्न तु द्रव्यत्वविशिष्टे इत्यस्य कोऽर्थः?

### "जात्याकृतिव्यक्तयः पदार्थः" इति सूत्रार्थविवरणपूर्वकं समाधानम्

अत्र वदन्ति – तद्विशिष्टे शक्तिरित्यस्य तद्धर्म-तद्वैशिष्ट्य-तदाश्रयेषु त्रिष्वेक[6]शक्तिरित्यर्थः। घटादिपदशक्तिमति द्रव्यत्वादिवैशिष्ट्यसत्त्वेऽपि द्रव्यत्वादौ तच्छक्ति[7]विरहात्तेषामुपलक्षणता। घटत्वादौ तत्सत्वाच्च तेषां विशेषणता। एवं च प्रवृत्तिनिमित्तेऽपि शक्तेस्सत्त्वात्तस्यापि वाच्यतया "वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वम्" इति प्रवृत्तिनिमित्तलक्षणे[8] वाच्यत्वे सतीति विशेषणदानं,

---

[1] वाक्यमिदं कुं.मं.

[2] इदं कंसे ग.

[3] द्रव्यत्वाद्य ग.

[4] द्रव्यत्वादि ग.

[5] का1. घटत्वादिवैशिष्ट्यसाधारण्यवद्द्रव्यत्वादिवैशिष्ट्यसाधारण्यस्याप्यक्षततया ज. घटादिपदशक्तेः घटत्वादिसामानाधिकरण्यरूपवैशिष्ट्यवद्द्रव्यत्वादिसामानाधिकरण्यस्यापि तत्र सत्त्वात् का2. / घटादिपदशक्तेः घटत्वादिसामानाधिकरण्यरूपवैशिष्ट्यवद्द्रव्यत्वादि [सामानाधिकरण्यरूप] वैशिष्ट्यस्याप्यक्षततया / ग.

[6] ज. त्रिष्वेव का.ग.

[7] का2. ग. शक्ति का1.

[8] प्रकाशस्थमिदं लक्षणम्। सामान्यधर्मातिव्याप्तिवारणाय वाच्योपस्थितिप्रकारत्वम्। शब्दाश्रयत्वे अतिव्याप्तिवारणाय वाच्यत्वमिति। अथवा द्रव्यत्वे अतिव्याप्तिवारणाय तत्।

"जात्याकृतिव्यक्तयः पदार्थः" इति न्यायसूत्रोक्तं[1] गोत्वादिजातेर्गवादिपदार्थत्वं च[2] उपपद्यते।

## पदार्थ-पदार्थतावच्छेदक-तत्सम्बन्धेषु त्रिषु शक्तिसम्बन्धनिरूपणम्

अथ "घटशब्दात् घटो बोद्धव्यः" इत्याकारिकाया भगवदिच्छाया बोधविषयतात्वेन[3] बोधविषयतानिष्ठप्रकारतानिरूपितविशेष्यता[4] घट एव, न तु घटत्वादौ, विषयता[5]मात्रं च वस्तुमात्र एवेति कथं "घटपदशक्तिर्घटत्वादिष्वेव त्रिषु, नान्यत्र"इति[6] नियम इति चेत्;

ईश्वरेच्छायास्तत्पदजन्यशाब्दबोधविषयताप्रयोजकः संबन्ध एव तत्र तत्पदशक्तिरितिव्यपदेशनियामकः। "घटपदात् घटो बोद्धव्यः" इत्येतादृशेच्छायां च घटत्वावच्छेदेन बोधविषयत्वमवगाहमानायां समवायावच्छिन्न विषयता[7]ऽवच्छेदकत्वं घटत्वे; समवायेन घटत्वावच्छेद्यत्वं वा[8] बोधविषयतायां[9] संसर्गमर्यादया भासते।

एवं चाश्रयत्वसंबन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितविशेष्यत्वं घटस्य; अवच्छेदकतासंसर्गावच्छिन्ना [10]घटविशेषणताऽऽपन्नबोधविषयत्वस्य या प्रकारता तन्निरूपितविशेष्यत्वं,[11] घटविशेषणताऽऽपन्नबोधविषयत्वांशे अवच्छेद्यत्वसंबन्धेन प्रकारत्वं वा घटत्वस्य, घटत्वे बोधविषयतायाः[12] संसर्गतया

---

[1] न्या.सू. 2.2.66.

[2] "जात्याकृतिव्यक्तयः पदार्थः" इति न्यायसूत्रोक्ता गोत्वादिजातेर्गवादिपदार्थता च इति कंसे ग. "जात्याकृतिव्यक्तयः पदार्थः" इति न्यायसूत्रोक्तं गोत्वादिजातेर्गवादिपदार्थत्वं च कुं.मं.

[3] ज. बोधविशेषविषयतात्वेन का. **बोधविशेषविषयत्वेन ग. गपाठस्सर्वथैवासंगतः।**

[4] का1.बोधविषयप्रकारतानिरूपितविशेष्यता का2. विषयता ग.

[5] विषयता का.ग. तद्वैशिष्ट्ययोः ज.

[6] 'घटपदशक्तिर्घटत्वादिष्वेवेति ग.

[7] ज.समवायावच्छिन्नं बोधविषयता का.ग.

[8] वा नास्ति ज.

[9] का1. विषयतायां का2.ग.

[10] संसर्गावच्छिन्न का 2.

[11] घटत्वस्य इत्यधिकं का 1.कुं.मं.



[12] का.घटत्वबोधविषयतयोः ज.ग.

भासमानेऽवच्छेदकत्वेऽवच्छेदकतया भासमानत्वं समवायस्येति त्रितयमेव घटपदजन्यबोधविषयतायां ज्ञातम्[1] उपयुज्यत इति त्रयाणां वाच्यतोपपत्तिः।

घटघटत्वसंसर्गेषु सङ्केतविषयतानां मिथोवैलक्षण्येऽपि तन्निरूपकतबोधनिष्ठविषयताया[2] ऐक्याच्छक्त्यैक्यप्रवादो, न तु सङ्केतैक्यात्, शक्तशक्यताऽवच्छेदकभेदेनापि[3] शक्तिभेदानुपपत्तेः, भगवत्सङ्केतस्याभेदात्। तदंशे आश्रयत्वसम्बन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितसङ्केतविषयताऽवगाहिज्ञानमेव तत्र पदार्थान्तरान्वयबोधोपयोगीति[4] शक्तिभ्रमं विना लोमरूपपदार्थताऽवच्छेदके न पदार्थान्तरान्वयः[5]।

## सङ्केतमुख्यविशेष्यत्वसम्बन्धेन शक्तिज्ञानस्य शाब्दकारणतायामनुपपत्ति-परिहारौ

यत्तु — तदंशे सङ्केतमुख्यविशेष्यताग्रहस्तत्रेतरान्वयबोधप्रयोजकः, "लोमादिमान्पशुपदाद्बोद्धव्यः" इत्याकारकसंकेते लोमाद्यंशे बोधविषयतायाः प्रकारत्वेऽपि लोमादेर्धर्मिविशेषणताऽऽपन्नस्यैव तादृशविषयताविशेष्यत्वं, न तु मुख्यविशेष्यत्वम्, अतः शक्तिभ्रमं विना न[6] लोमादौ पदार्थान्तरान्वय इति [7]तादृशविषयत्व–प्रकारतायामाश्रयत्वसंम्बन्धावच्छिन्नत्वनिवेशनमनर्थकमिति।

---

[1] ना.ग.मञ्जूषा.

[2] तन्निरूपकबोधनिष्ठविषयताया का 2. तन्निरूपकबोधविषयताया हरिनाथ. तन्निरूपितबोधविषयताया ज. तन्निरूपकबोधविषयतात्वनिष्ठविषयताया का 1. तन्निरूपकबोधविषयत्वविषयतायाः ग. तन्निरूपकबोधविषयत्वनिष्ठविषयतायाः मं. तन्निरूपकबोधविषयत्वप्रकारतायाः S5, ग.

[3] शक्तशक्यताऽवच्छेदकभेदेनापि का.ग. शक्तत्वशक्तताऽवच्छेदकभेदेपि ज. शक्य-शक्यतावच्छेदक-शक्तभेदेनापि मं.

[4] ज. ज्ञानस्यैव पदार्थान्तरान्वयबोधोपयोगित्वमिति का. ज्ञानस्यैव तदंशे पदार्थान्तरान्वयबोधोपयोगित्वमिति ग.

[5] पदार्थताऽवच्छेदके न पदार्थान्तरान्वयः का 1.ग. न पदार्थताऽवच्छेदके पदार्थान्तरान्वयः का 2. न पदार्थतावच्छेदकेन पदार्थान्तरान्वयः ज.

[6] [न शक्तिभ्रमं विना ] ग.



[7] इदं कंसे ग.

तन्न, "लोम पशुपदजन्यबोधविषयताऽवच्छेदकं भवतु" [1]इत्याद्याधुनिकसंकेतविषयकात् "अवच्छेदकतासंसर्गक[2]बोधविषयत्वप्रकारकसंकेतमुख्यविशेष्यं लोम" इति ज्ञानात् लोमादौ पदार्थान्तरान्वयबोधानुदयात्[3] आश्रयतासम्बन्धावच्छिन्नत्वेन तादृशशाब्द[4]बोधविषयत्वप्रकारताऽवगाहिताया अवश्यं निवेशनीयत्वात्। तत्र च[5] लोमावच्छिन्नविशेष्यकशाब्द[6]बोधस्यैव संकेतविषयतया तादृशसंकेतग्रहेणा[7]न्यादृशबोधोत्पत्तेरनुभवविरुद्धतयेष्टापत्तेरयोगात्, [8]तादृशविशेष्यतायां मुख्यत्वनिवेशे प्रयोजनाभावात्[9]।

---

[1] इत्यादिसंके (कुं) ताकारप्रयोजकतावच्छेदकसंसर्गावच्छिन्नतादृशबोधविषयत्वप्रकारतावागाहिलोमादिमुख्यविशेष्यकसंकेतज्ञानेपि लोमादै पदार्थान्तरान्वयबोधानुदयात् आश्रयतासंबन्धावच्छिन्नत्वेन तादृशबोधविषयत्वप्रकारतावगाहिताया अवश्यं निवेशनीयत्वात् लोमविशिष्टो बोद्धव्य इत्यत्रेव दर्शितसंकेतेपि लोम्नः पदार्थतावच्छेदकत्वमेवेति तज्ज्ञानाल्लोम्नि पदार्थान्तरान्वयबोधे इष्टापत्तेरयोगात् (कुं) मं.

[2] का. आधुनिक ना.का1. इत्याद्याधुनिकसंकेतविषयकात् अवच्छेदकतासंसर्गावच्छिन्नतादृश का.2 इत्यादि[आधुनिक]संकेतविषयकाद् "अच्छेदकतासंसर्गक[तादृश] ग. इत्याद्याधुनिकसंकेतविषयतावच्छेदकतासंसर्गावच्छिन्नतादृश ज. इदं न कुं.मं.

[3] ज.लोमादिमुख्यविशेष्यकशाब्दबोधानुदयेन का.ग.मं.

[4] शाब्द ना.का2.ग.

[5] च ना.ग.

[6] शाब्द ना.का2.ग.

[7] ग्रहेण का .ग.

[8] इदं वाक्यं कंसे ग.

[9] तन्न, 'लोम पशुपदजन्यबोधविषयताऽवच्छेदकं भवतु' इत्यादिसंकेताकारप्रयोजकावच्छेदकतासंसर्गावच्छिन्नतादृशबोधविषयत्वप्रकारत्वावगाहिलोमादिमुख्यविशेष्यकसंकेतज्ञानेपि लोमादौ पदार्थान्तरान्वयबोधानुदयात् आश्रयतासम्बन्धावच्छिन्नत्वेन तादृशबोधविषयत्वप्रकारताऽवगाहिताया अवश्यं निवेशनीयत्वात्। लोमादिविशिष्टो बोद्धव्य इत्यत्रेव दर्शितसंकेतेपि लोम्नः पदार्थतावच्छेदकत्वमेवेति तज्ज्ञानात् लोम्नि पदार्थान्तरान्वये इष्टापत्तेरयोगात्--- **इत्यादिरधिकः सर्वथा अयुक्तः पाठो दृश्यते ग.**

एवं च "पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन" इत्यत्र पदार्थत्वं बोधविषयताऽऽश्रयत्वेन संकेतविषयत्वम्; तदेकदेशत्वं च बोधविषयताऽवच्छेदकत्वेन तथात्वरूपम्, तदेव रूपं[1] शक्यताऽवच्छेदकत्वमित्यवधेयम्।

**शक्तिग्रह-शाब्दबोधयोः कार्यकारणभावे आक्षेपः**

[2]अथ घटत्वाद्युपलक्षिते द्रव्यपदशक्त्यवगाहिप्रमातो घटत्वादिप्रकारकस्य; घटादिपदशक्तिप्रमातः कालिकादिसम्बन्धेन घटत्वादिप्रकारकस्य च शाब्दबोधस्य वारणाय तत्सम्बन्धेन तद्धर्मप्रकारकशाब्दबोधं[3] प्रति तेन सम्बन्धेन[4] तद्धर्मविशिष्टांशे तत्पदत्वाच्यत्वावगाहि ज्ञानं कारणं वाच्यम्।

विशिष्टांशे तत्पद[5]वाच्यताऽवगाहित्वं च विशेषणीभूततद्धर्म-तदीय[1]तत्सम्बन्ध-तद्धर्म्यंशे तदवगाहित्वं[2] वाच्यं; न तु तेन सम्बन्धेन तद्धर्मं

---

[1] नास्ति का. तदेव रूपं च ना.ग.

[2] अथ घटत्वाद्युपलक्षिते द्रव्यपदशक्त्यवगाहिप्रमातो घटत्वादिप्रकारकस्य, घटादिपदशक्तिप्रमातः कालिकादिसम्बन्धेन घटत्वादिप्रकारकस्य च शाब्दबोधस्य वारणाय तत्सम्बन्धेन तद्धर्मप्रकारकबोधं प्रति तत्सम्बन्धेन तद्धर्मविशिष्टविषयिणी या शक्तिः तद्विषयकत्वेन न कारणता संभवति, शक्तिभ्रमात् शाब्दबोधानुपपत्तेः। नापि तत्संबन्धेन तद्विशिष्टे शक्तविषयतावगाहित्वेन, तदर्थस्य दुर्वचत्वात्। न च तद्धर्मतद्वैशिष्ट्यतद्धर्मविशेष्यकत्वावच्छिन्नशक्तिविषयतावगाहित्वं तदर्थः, घटो घटपदवाच्यः इत्यादिज्ञानस्य स्वरूपतो घटत्वादिप्रकारकस्य घटत्वाद्यविशेष्यकत्वात्, वैशिष्ट्याविशेष्यकत्वाच्च अहेतुतापत्तेः। न च तादृशज्ञानम् अहेतुरेव, घटत्वसमवायघटा घटपदवाच्या इत्याकारकमेव ज्ञानं हेतुरुपेयमिति वाच्यम्। घटत्वत्वाद्यनुपस्थितिदशायां घटादिपदात् शाब्दधीविलयप्रसङ्गात्। नापि शक्तौ तत्त्रितयविषयतावगाहित्वेन विषयतांशे, तेन संबन्धेन इच्छांशे वा स्वरूपतो घटत्वप्रकारकज्ञानस्य हेतुता। तावता घटत्वत्वाद्यनुपस्थितिदशायां घटादिपदात् शाब्दबोधोपपादनेपि समवायादेः स्वरूपतः प्रकारत्वासंबन्धेन समवायत्वादिप्रकारेणैव तज्ज्ञानस्योपगन्तव्यतया तदनुपस्थितिदशायां ततः शाब्दबोधानुपपत्तेः। तथा च केन रूपेण तत्र शक्तिधीहेतुता? ----**इत्यधिकोऽसंगतश्च पाठः ग.** कुं.मं.

[3] बोधे मं.

[4] तत्संबन्धेन का. ग.



[5] तत्पद ना.ग.

धर्मिताऽवच्छेदकीकृत्य तदवगाहित्वमात्रम्[3]। घटत्वादिकं धर्मितावच्छेदकीकृत्य द्रव्यादिपदशक्तिज्ञानस्यापि, कालिकादिसम्बन्धेन घटत्वादिकं धर्मिताऽवच्छेदकीकृत्य घटादौ घटपदशक्तिग्रहस्यापि च प्रमात्वेनोक्तातिप्रसङ्गावारणात्[4]।

एवमपि घटत्वांशे निर्धर्मिताऽवच्छेदककात्प्रमेयत्वादिधर्मिताऽवच्छेदककाच्च घटादिपदनिरूपितवाच्यताग्रहात् तत्प्रकारकबोधवारणाय स्वरूपतो घटत्वादिप्रकारकबोधे घटत्वत्वाद्यवच्छिन्न-धर्मिकवाच्यत्वग्रहापेक्षोपेया। तथा च घटत्वत्वाद्यनुपस्थितिदशायां[5] शाब्दबोधानुपपत्तिः।

न च घट[6]पदांशे घटादिवाचकत्वज्ञानमेव शाब्दबोधहेतुः, एवं च स्वरूपतो घटत्वादिप्रकारकबोधे वाचकतांशे स्वरूपतो घटत्वादिप्रकारकज्ञानस्यैव हेतुत्वमिति घटादिपदजन्यबोधे घटत्वत्वाद्युपस्थितेर्नापेक्षेति वाच्यम्।

एवमपि घटादिपदांशे समवायवाचकताप्रकारकज्ञानस्य शाब्दबोधे घटत्वादिसम्बन्धतया स्वरूपतः समवायभानप्रयोजकताया वाच्यतया, समवायवाचकताज्ञाने च वाचकतांशे स्वरूपतः समवायस्य प्रकारत्वासम्भवेन नित्यसम्बन्धत्वरूप[7]समवायत्वेनैव समवायावगाहिताया उक्तसमवायभान प्रयोजकत्वस्योपेयतया तदनुपस्थितिदशायां घटादिपदाच्छाब्दबोधानुपपत्ति[8]रिति चेत्,

---

[1] तदीयेति नास्ति का 2.
[2] गाहित्वरूपं का2.ग.
[3] गाहित्वम् का 1.
[4] वारणासंभवात् ज.
[5] घटादिपदात् अ.ग.
[6] घट ना.ग.मं.
[7] रूपेण ग. 
[8] का1.पपत्तेः। तथा च केन रूपेण तत्र शक्तिधीहेतुता का 2. पपत्तेर्दुर्वारत्वादिति चेन् ग.

**निष्कृष्टकार्यकारणभावप्रदर्शनम्**

[1]न[2]— तत्सम्बन्धेन तद्धर्मप्रकारकशाब्दबोधे तत्संसर्गावच्छिन्न तद्धर्मनिष्ठावच्छेदकताकस्वजन्यबोध-विषयत्वप्रकारता निरूपितेच्छाविशेष्यता त्वावच्छिन्नसंसर्गताक-तत्सम्बन्धावच्छिन्नतद्धर्मनिष्ठ धर्मिताऽ वच्छेदकताक-पदप्रकारकज्ञानत्वेन[3] विषयताविशेषसंसर्गक-अर्थविशेष्यक शक्तिज्ञानस्य हेतुता।

ईदृशशक्तिग्रहे च सम्बन्धघटकतयैवावच्छिन्नत्वांशे समवायभानात्, स्वरूपतोऽपि तस्य तथा भानसम्भवेन समवायत्वोपस्थितेर्नापेक्षेति सामञ्जस्यम्[4]।

**द्रव्यपदात् घटत्वप्रकारकबोधवारणम्**

तेन[5] "द्रव्यपदात् द्रव्यं बोद्धव्यम्" इत्याकारता[6]प्रयोजक द्रव्यपदजन्यबोधविषयत्वीयभगवदिच्छाप्रकारता न घटत्वावच्छिन्नविषयत्वनिष्ठा; अपि तु द्रव्यत्वावच्छिन्नविषयत्वनिष्ठैवेति द्रव्यपदजन्यबोधीयघटत्वावच्छिन्नविषयत्व-निष्ठ[7]प्रकारतानिरूपितभगवदिच्छानिरूपित[8]विशेष्यतात्वावच्छिन्नसंसर्गेण

---

1 अत्रोच्यते। तत्संबन्धेन तद्धर्मप्रकारकशाब्दबोधे तत्संबन्धावच्छिन्नतद्धर्मनिष्ठावच्छेदकताक बोधविषयत्वप्रकारतानिरूपितविशेष्यतात्वावच्छिन्नसंसर्गकतद्धर्मावच्छिन्नविशेष्यकेच्छाप्रकार कज्ञानत्वेन विषयताविशेषसंसर्गकार्थ विशेष्यकशक्तिज्ञानस्य हेतुता। न तत्संबन्धेन --- **इत्यधिकः सर्वथासंगतश्च पाठः ग.**

2 अत्रोच्यते का 2.

3 तत्सम्बन्धेन तद्धर्मप्रकारकशाब्दबोधे तत्संसर्गावच्छिन्न तद्धर्मनिष्ठावच्छेदकताक स्वजन्य बोधविषयत्वप्रकारतानिरूपितेच्छाविषयतात्वावच्छिन्न संसर्गताकतद्धर्मावच्छिन्न विशेष्यकेच्छाप्रकारकज्ञानत्वेन मं.

4 सामञ्जस्यात् ग.

5 ना. का.ग.

6 इत्याकारकता ग.

7 निष्ठ ना.ग. 

8 भगवदिच्छानिरूपित ना.ग.

घटत्वाद्यवच्छिन्ने द्रव्यपदप्रकारकं[1] ज्ञानं द्रव्यत्वावच्छिन्नत्वस्य संसर्गताऽवच्छेदकघटकघटत्वावच्छिन्नत्वांशे भ्रमः[2]।[3]

न च द्रव्यपदजन्यविभक्त्युपस्थापितैकत्वादिप्रकारक द्रव्यत्वावच्छिन्न विशेष्यक[4]बोधीया या एकत्वावच्छिन्नविषयता, साऽपि द्रव्यपदजन्यबोधीय द्रव्यत्वावच्छिन्नविषयतात्वेन भगवदिच्छाविषयः एव[5]; एवं च द्रव्यपदजन्यबोधीयैकत्वावच्छिन्नविषयत्वनिष्ठ[6]प्रकारतानिरूपितविशेष्यतासंबन्धेनैक त्वादिमतो द्रव्यपदवत्त्वात्[7] द्रव्यपदादभ्रान्तस्य पदान्तरानुपस्थितैकत्वप्रकारेणापि शाब्दबोधप्रसङ्गो दुर्वार एवेति वाच्यम्।

[8] तादृशविशेष्यतात्वेन तस्याः संबन्धताऽनुपगमात्[9]। [1]

---

[1] छिन्नांशे भगवदिच्छाप्रकारकज्ञानं ग.

[2] तदवच्छिन्नविषयतानिष्ठत्वस्य ज. संसर्गताऽवच्छेदकघटकघटत्वावच्छिन्नत्वांशे भ्रम एव का. एव ना.ग. घटत्वाद्यवच्छिन्नांशे भगवदिच्छाप्रकारकज्ञानं संसर्गतावच्छेदकघटकघटत्वावच्छिन्नांशे भ्रम एवेति मं.

[3] द्रव्यपदात् द्रव्यं बोद्धव्यम्" इत्याकारकताप्रयोजकद्रव्यपदजन्यबोधविषयत्वीयभगवदिच्छाप्रकारता न घटत्वावच्छिन्नविषयत्वनिष्ठा; अपि तु द्रव्यत्वावच्छिन्नविषयत्वनिष्ठैव, तेन द्रव्यपदजन्यबोधीयघटत्वावच्छिन्नविषयत्व-प्रकारतानिरूपितत्वविशेषितभगवदिच्छाविशेष्यतासंसर्गेण घटत्वावच्छिन्नांशे द्रव्यपदप्रकारकं ज्ञानं संसर्गताऽवच्छेदकघटकघटत्वावच्छिन्नत्वांशे भ्रमः—**इत्यधिकोऽसंगतश्च पाठः ग.**

[4] विषयक ग.

[5] नास्ति का.ग.

[6] निष्ठ इति नास्ति का 2.ग.

[7] भगवदिच्छावत्त्वात् ग.

[8] न च द्रव्यपदजन्यविभक्त्युपस्थापितैकत्वादिप्रकारकद्रव्यत्वावच्छिन्नविशेष्यकबोधीया या एकत्वावच्छिन्नविषयता, साऽपि द्रव्यपदजन्यबोधीयद्रव्यत्वावच्छिन्नविषयतात्वेन भगवदिच्छाविषयः; एवं च द्रव्यपदरूपस्वजन्यबोधीयैकत्वावच्छिन्न विषयत्वप्रकारतानिरूपितभगवदिच्छाविशेष्यतासंबन्धेनैकत्वादिमतो द्रव्यपदवत्त्वात् द्रव्यपदादभ्रान्तस्य पदान्तरानुपस्थितैकत्वप्रकारेणापि शाब्दबोधप्रसङ्गो दुर्वार एवेति वाच्यम्-- **इत्यधिकोऽसंगतश्च पाठः ग.**

[9] तादृशविशेष्यत्वेन ईश्वरेच्छासंबन्धताऽनुपगमात् ज. तादृशविशेष्यत्वेन इच्छासंबन्धताऽनुपगमात् ग.

[2]अथ वा तत्पदजन्यतद्धर्मप्रकारकशाब्दबोधे तद्धर्मावच्छिन्नत्वावच्छिन्नत्वेन तत्पदजन्य[3]बोधविषयत्व-प्रकारताऽवगाहि तादृशप्रकारतानिरूपितविशेष्यतासंसर्गकं पद[4]प्रकारकं ज्ञानं हेतुः इत्युपगमात्[5]।[6] एवं च[7] एकत्वादिप्रकारक द्रव्यादिपदजन्यबोधजनकशक्तिग्रहेण द्रव्यादिपदजन्यबोधविषयत्वनिष्ठायां द्रव्यत्वावच्छिन्नत्वेनैव तादृशविषयत्वमवगाहमानाया भगवदिच्छायाः प्रकारतायां[8] द्रव्यत्वमात्रावच्छिन्नत्वेनावच्छिन्नायां बाधितस्यैकत्वावच्छिन्नत्वावच्छिन्नत्वस्यावगाहनात्तस्य भ्रमत्व[9]निर्वाहेण अतिप्रसङ्गानवकाशात्।[10]

## शक्यतावच्छेदकघटत्वादौ न शक्तिरिति दीधितिकारमतोपन्यासः

यत्तु —

---

[1] निविशतां वा तद्रूपावच्छिन्नत्वावच्छिन्नबोधविषयत्व-प्रकारतानिरूपितविशेष्यतात्वावच्छिन्नस्य संसर्गविधया विषयत्वम्, तत्प्रकारकधीजनकतावच्छेदकगर्भे। तथा च सति द्रव्यपदजन्यबोधविषयताया द्रव्यत्वावच्छिन्नत्वेनैव भगवदिच्छायां प्रकारतया भानोपगमात् तन्निष्ठप्रकारतायां बाधितस्य एकत्वावच्छिन्नत्वावच्छिन्नत्वस्यैकत्वादिप्रकारकधीजनकशक्तिग्रहेण विषयीकरणात् तस्य भ्रमत्वम्। अ.ज. इदं वाक्यं नास्ति का.

[2] अथवा का.ग. ना.ज.

[3] स्वजन्य ज.

[4] इच्छा ग.

[5] इत्युपगमात् ना.का2. ग.मं.

[6] तत्पदजन्यतद्धर्मप्रकारकशाब्दबोधे तद्धर्मावच्छिन्नत्वावच्छिन्नत्वेन स्वजन्यबोधविषयत्वप्रकारताऽवगाहि तादृशप्रकारतानिरूपितविशेष्यतासंसर्गकं पदप्रकारकं ज्ञानं हेतुः इत्युपगमात् -- **इत्यधिकोऽसंगतश्च पाठः ग.**

[7] एवं च ना.ज.मं.

[8] ज. विषयत्वनिष्ठद्रव्यत्वावच्छिन्नत्वेनैव तादृशविषयत्वमवगाहमानायाः भगवदिच्छायाः प्रकारतायां का 1. विषयत्वीयद्रव्यत्वावच्छिन्नत्वविशिष्टभगवदिच्छाप्रकारतायां का 2.ग.

[9] का 1.ज. भ्रमत्वम् का 2.ग.

[10] एकत्वादिप्रकारकद्रव्यादिपदजन्यबोधजनकशक्तिग्रहेण द्रव्यादिपदजन्यबोधविषयत्वनिष्ठायां द्रव्यत्वावच्छिन्नत्वेनैव तादृशबोधविषयत्वमवगाहमानाया भगवदिच्छायाः प्रकारतायां द्रव्यत्वमात्रावच्छिन्नत्वेनावच्छिन्नायां बाधितस्यैकत्वावच्छिन्नत्वावच्छिन्नत्वस्यावगाहनात्तस्य भ्रमत्वनिर्वाहेण उक्तातिप्रसङ्गानवकाशात्-- **इत्यधिकोऽसंगतश्च पाठः ग.**

पदार्थांशे घटत्वादिधर्मस्य शाब्दबोधप्रकारतायां तदंशे तत्पदशक्यताऽवच्छेदकत्वमेव प्रयोजकम्। शक्यताऽवच्छेदकत्वं च तत्पदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यताऽवच्छेदकत्वं; न तु बोधविषयतावच्छेदकतया[1] संकेत[2]विषयत्वरूपं विशेषणविधया वाच्यत्वम्। तथाच[3] तद्धर्मप्रकारकशाब्दबोधे [4]तद्धर्मावच्छिन्नत्वविशिष्टतादृशविशेष्यतारूपशक्ति[5]संसर्गकं पदप्रकारकमर्थविशेष्यकज्ञानमेव[6] कारणमास्ताम्। द्रव्यादिपदजन्यबोधविषयत्व प्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यतात्वेनैव[7] सम्बन्धता; न तु तादृशप्रकारतानिरूपितघटत्वाद्यवच्छिन्नविशेष्यतात्वेनेति[8], तादृशप्रकारतानिरूपितभगवदिच्छाविशेष्यतायां द्रव्यत्वादेरेवावच्छेदकत्वं; न तु घटत्वादेरित्येवं[9] वा स्वीकरणीयमिति नोक्तातिप्रसङ्ग[10] इति शक्यताऽवच्छेदके शक्तिं दूषयतां दीधितिकृतां **प्रत्यक्षमणिदीधितिप्रदर्शितमतम्**[11]।[1]

---

[1] बोधविषयतया का 1.

[2] उपस्थिति ज.

[3] अथ ग.

[4] स्वजन्यबोधविषयत्वप्रकारतानिरूपित अ. ज.

[5] विषयता का 2.

[6] पदशक्तिज्ञानमेव का 1. शक्तिज्ञानमेव का 2. तादृशविषयतासंसर्गकशक्तिज्ञानमेव ग.

[7] ज. द्रव्यादिपदजन्यबोधविषयत्वप्रकारतानिरूपितद्रव्यत्वावच्छिन्नभगवत्सङ्केतविशेष्यताया घटत्वावच्छिन्नत्वेऽपि तस्यास्तादृशप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यतात्वेनैव का 1.ग. मं.
द्रव्यादिपदजन्यबोधविषयत्वप्रकारतानिरूपितद्रव्यत्वावच्छिन्नभगवत्सङ्केतीयविशेष्यतात्वेनैव का2.

[8] त्वेन ज. का2.

[9] एव का2.ग.

[10] किं प्रवृत्तिनिमित्तस्य वाच्यत्वोपगमेन अ. का 2. तथा च किं प्रवृत्तिनिमित्तस्य वाच्यत्वोपगमेन अ.ग.

[11] तन्न शोभनम्। ईश्वरीयद्रव्यादिपदसंकेतश्च द्रव्यपदात् द्रव्यं बोद्धव्यम् इत्याकारक एव न तु द्रव्यपदात् घटो बोद्धव्य इत्याकारको घटत्वावच्छिन्नविशेष्यताक इत्युपेयते। तथा चाभ्रान्तस्य न द्रव्यादिपदात् घटत्वादिप्रकारकबोधप्रसङ्गः। तत्पदजन्यघटत्वादिप्रकारबोध जनकत्वावच्छिन्नत्वेनावगाहनात् तस्य प्रमात्वसंभवादिति किं प्रवृत्तिनिमित्तस्य वाच्यत्वोपगमेनेति शक्यतावच्छेदकमवाच्यमेवेति दीधितिकारमतम्, तन्न। इत्यधिकं ज.

## शक्यतावच्छेदके शक्तिसमर्थनपूर्वकं दीधितिकृन्मतनिरासः

तन्न शोभनम्[2] – एवं सति शक्तिज्ञानाधुनिकसंकेतज्ञानयोरेकरूपेणैव हेतुत्वात् यत्र "द्रव्यपदात् गुणवत्त्वादिना द्रव्यं बोद्धव्यम्" इत्याकारकाधुनिकसङ्केतस्य विषयता द्रव्यत्वाद्यवच्छिन्ने गृहीता तत्र[3] तादृशसंकेतग्रहात् द्रव्यत्वेन द्रव्यबोधापत्तेः, गुणवत्त्वादिप्रकारकबोधानुपपत्तेश्च दुर्वारत्वात्[4]।[5]

**इति शक्तिवादे सामान्यकाण्डः।**

---

[1] यत्तु तद्धर्मप्रकारकशाब्दबोधे स्वजन्यबोधविषयत्वप्रकारतानिरूपित तद्धर्मावच्छिन्नत्वविशेषितविशेष्यतासंसर्गकपदप्रकारकशक्तिज्ञानमेव कारणमास्ताम्। ईश्वरीयद्रव्यादिपदसंकेतश्च द्रव्यपदात् द्रव्यं बोद्धव्यम् इत्याकारक एव, न तु द्रव्यादिपदात् घटो बोद्धव्य इत्याकारको घटत्वावच्छिन्नविशेष्यताक इत्युपेयते। तथा चाभ्रान्तस्य न द्रव्यादिपदात् घटत्वादिप्रकारकशाब्दबोधप्रसङ्गः, (तत्र) तत्पदजन्यघटत्वादि प्रकारकबोधजनकशक्तिग्रहेण (घटो द्रव्यपदशक्य इत्याकारेण) तत्पदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यताया बाधितघटत्वाद्यवच्छिन्नत्वेनावगाहनात् तस्य प्रमात्वासंभवात् इति किं प्रवृत्तिनिमित्तस्य वाच्यत्वोपगमेनेति शक्यतावच्छेदकमवाच्यमेवेति दीधितिकारमतम्, न। **इत्यधिकोऽसंगतश्च पाठः ग. मं.** (अत्र कंसस्थं मञ्जूषारीत्या)

[2] न। ग.

[3] कारकः आधुनिकः (ना.) कस्यचित्सङ्केतो द्रव्यत्वाद्यवच्छिन्नविशेष्यतासम्बन्धेन गृहीतस्तत्र का 1.मं. ग. कारकाधुनिकसङ्केतीय द्रव्यत्वाद्यवच्छिन्नविशेष्यता द्रव्ये गृहीता तत्र का 2.

[4] पपत्तेर्दुर्वारत्वाच्च मं.

[5] तन्न। एवं सति शक्तिज्ञानाधुनिकसंकेतज्ञानयोरेकरूपेणैव हेतुत्वात् यत्र "द्रव्यपदात् गुणवत्त्वादिना द्रव्यं बोद्धव्यम्" इत्याकारकाधुनिकसङ्केतस्य विषयता द्रव्यत्वाद्यवच्छिन्ने गृहीता तत्र द्रव्ये एतादृशसंकेतग्रहात् द्रव्यत्वेन द्रव्यबोधापत्तेः, गुणवत्त्वाद्यवच्छिन्ने तस्याग्रहात् अभ्रान्तपुरुषीयगुणवत्त्वादिप्रकारकबोधानुपपत्तेश्च दुर्वारत्वात्-- **इत्यधिकोऽसंगतश्च पाठः ग.**

# विशेषकाण्डः

## आकाशपदशक्तिविचारः

अथ पदार्थांश इव प्रकारीभूतधर्मांशेऽपि वाच्यत्वग्रहस्यापेक्षितत्वे आकाशपदात् शब्दाश्रयतया बोधो न स्यात्। शब्दाश्रयत्वस्याकाशपदावाच्यतायाः सिद्धान्तसिद्धत्वात्। अत एव तद्वारणायैव प्रवृत्तिनिमित्तलक्षणे वाच्यत्वे सतीति विशेषणोपादानमिति चेत्?

न, शब्दाश्रयत्वस्याकाशपदवाच्यत्वमनङ्गी[1]कर्तृभिः प्राचीनैराकाश पदादाकाशांशे तदुपस्थाप्याप्रकारकशाब्दबुद्धेरेवोपगमात्। तदुक्तम्[2]- "अस्तु वा पदादपि निर्विकल्पकम्" इति। निर्विकल्पकत्वं च तदंशे तत्पदोपस्थाप्याप्रकारकत्वं; न तु तदंशे सामान्यतो निष्प्रकारकत्वम्। विभक्त्युपस्थाप्यैकत्वादीनां तदंशे प्रकारताया आवश्यकत्वात्, तेन समं पदार्थान्तरस्य संसर्गानवगाहने तादृशबोधस्य शाब्दत्वासंभवाच्च।

वस्तुतस्तु तत्र निर्विकल्पकपदं तत्पदोपस्थाप्यधर्मा[3]विशेषितधर्मिविषयक-शाब्दानुभवजनकनिर्विकल्पकस्मरणपरम्। अत एव तत्र "निर्विकल्पकरूपस्य स्मरणस्यानुपपत्तिः, अनुभवस्य स्वसमानप्रकारकमात्रस्मृतिजनकत्वात्" इत्याशङ्क्य [4]प्रकारान्तरेण तादृशस्मरणमुपपादितं [5]**मिश्रैः**।

अत्र च मते जात्यतिरिक्तस्य तस्य स्वरूपतः पदार्थान्तरे प्रकारत्वासम्भवादाकाशवासीत्यादौ शाब्दबोधानुपपत्तिः, अन्वयिताऽवच्छेदकावच्छिन्न एव च पदार्थान्तरान्वय इति नियमानुपपत्तिश्चेति

---

[1] मङ्गी ज.

[2] त.चिं.म.अपूर्ववादसिद्धान्ते पृ.384.

[3] स्थाप्यार्थो का 1.मं.

[4] तद्धर्मनिष्ठप्रकारत्वान्यप्रकारत्वानिरूपकतद्विशेष्यताशालिस्मरणं प्रति तत्प्रकारकतद्विशेष्यकसंस्कारः कारणमिति प्रकारान्तरम्।



[5] पक्षधरमिश्रैः ज.

पदार्थवत्तत्प्रकारीभूतधर्मांशेऽपि शक्तिग्रहापेक्षायां गोत्वादेर्गवादिपदवाच्यत्ववत् शब्दाश्रयत्वस्याप्याकाशपदवाच्यत्वमावश्यकमित्यभिप्रेत्य[1] दीधितिकृता गुणटिप्पण्यां रूपग्रन्थे "अत्रेदं तत्त्वम्" इत्यादिना गोत्वादिना शब्दाश्रयत्वस्याविशेषं व्युत्पाद्य; प्रकाशस्थप्रवृत्तिनिमित्तलक्षणे वाच्यत्वविशेषणोपादानं दूषितमेव। [2]प्रत्यक्षमणिदीधितौ च पदार्थांशे गोत्वादेः प्रकारतायां शक्यताऽवच्छेदकतायाः प्रयोजकत्वमुपगम्य शक्यताऽवच्छेदके शक्तिर्दूषितैव। तत्रोक्तानुपपत्तिश्चिन्त्या।

**अत्र यत्तुकल्पः**

यत्तु शक्त्याऽऽकाशपदादष्टद्रव्यातिरिक्तद्रव्यत्वादिनाऽप्याकाशबोधो भवति, न तु नियमतः शब्दाश्रयत्वेनैव। तथासति "आकाशः शब्दाश्रयः" इति सहप्रयोगस्य मुख्यताऽनुपपत्तिः।

प्रत्येकं नानाधर्मविशिष्ट एवाकाशे तत्पदस्य नानाशक्तिकल्पनं तु न संभवति। नानासमनियत[3]धर्मावच्छिन्नैकधर्मिण्येकपदवाच्यतायाः क्वाप्यदृष्टत्वादिति शब्दाश्रयत्वोपलक्षित एवाकाशपदशक्तिरिति अवश्यमुपगन्तव्यम्[4] । उपलक्षणस्यापि विशिष्टावाचकपदजन्यशाब्दबोधप्रकारत्वे न किंचित् बाधकम् [5]इति प्राचीनमतमेव साधु ।[6]

न च शब्दाश्रयत्वस्योपलक्षणत्वे तस्येवाविशेषात्प्रमेयत्वादेरप्याकाशपद जन्यानुभवप्रकारताऽऽपत्तिरिति वाच्यम्। तत्प्रकारकशाब्दबोधे तदंशेऽनति प्रसक्तत्वरूपशक्यताऽवच्छेदकत्वावगाहित्वेनोपलक्षिते शक्तिज्ञानस्य[7] हेतुत्वादिति,

---

[1] प्रेत्यैव का 1. मं.वाच्यत्वमस्त्येव। अत एव दीधितिकृता का2.

[2] इदं वाक्यद्वयं कुं.मं

[3] ज. समनियत. अन्यत्र नास्ति।

[4] इदं ज. तत्स्थाने प्राचीनमतमेव साधु इति का.

[5] इदं जपुस्तके।

[6] उपलक्षणस्यापि विशिष्ट(ष्टा)वाचकपदजन्यशाब्दबोधे प्रकारत्वे न किंचिद्बाधकम् अ.का2.



[7] लक्षितज्ञानस्य ज.

### यत्तुकल्पनिरासः

तन्न, आकाशः शब्दाश्रय इति [1]प्रयोगस्य मुख्यत्वासिद्ध्या अष्टद्रव्यातिरिक्तद्रव्यत्व-आकाशपदवाच्यत्वाद्येकतररूपेण लक्षणाया एव तत्रोपगमादिति।

यदि चाकाशः शब्दाश्रय इति वाक्यस्थमाकाशपदं मुख्यमेव; निर्धर्मिताऽवच्छेदककश्चान्वयबोधो न कुत्रापि, तदाऽऽकाशपदाच्छक्त्या अष्टद्रव्यातिरिक्तद्रव्यत्वादिना बोधनिर्वाहाय विशिष्टावाचकाकाशादिपदस्य प्रकारांशे वाच्यत्वानवगाहिशक्तिग्रहस्यैव तद्धर्मावच्छिन्नविशेष्यक तत्प्रकारकान्वयबोधे हेतुत्वमगत्याऽङ्गीकार्यम्।

## आनुषङ्गिकः गवादिविशिष्टवाचकपदशक्तिविचारः

विशिष्टवाचकगवादिपदस्य प्रकारांशे वाच्यत्वावगाहिशक्तिज्ञानमेव तत्प्रकारकान्वयबोधहेतुरिति न शक्तिभ्रमलक्षणाग्रहमन्तरेण गवादिपदात् गोपदवाच्यत्वाद्यवाच्यधर्मप्रकारको बोधः।

आकाशादिपदमिव गवादिपदमपि विशिष्टावाचकमिति भ्रमवतो गवादिपदादवाच्यधर्मप्रकारकबोधनिर्वाहाय तद्धर्मप्रकारकशाब्दबोधे तद्धर्मसामानाधिकरण्यमात्रावगाहितत्पदवाच्यताऽवगाहिग्रहस्य हेतुत्वेऽपि तद्धेतुतायां वाच्यतांऽशे विशेषणानन्तर्भावित्वावगाहित्वमप्यवच्छेदकमुपेयम्, अतोऽवाच्यधर्मप्रकारकबोधहेतुगवादिपदशक्तिग्रहस्य भ्रमत्वनियमः। अतो नाभ्रान्तस्य ततस्तादृशबोध इति ध्येयम्।

### सामान्यवाचकपदस्य विशेषवाचकत्वे लक्षणा

[2]एवं च यत्र सुवर्ण-हलवहनयोग्यगवादिरूपविशेषपरं सामान्यवाचक पदघटितं द्रव्यं नास्ति, गौर्नास्तीति वाक्यं प्रयुज्यते, तत्र विशेषधर्मावच्छिन्ने लक्षणैव। विशेषधर्मस्य सामान्यपदावाच्यतया शक्त्या तद्रूपप्रकारकबोधानिर्वाहात्।

---

[1] सत्प्रयोगस्य ज. 

[2] इदं वाक्यसमूहद्वयं "यदि चाकाशः शब्दाश्रय" इत्यादिवाक्यसमूहद्वयात्प्रागेव मं.का2.

### विशेषवाचकस्य सामान्यपरत्वेपि लक्षणा

एवं यत्र दुःखासंभिन्नसुखत्व-धानकर्मगोत्वादिविशिष्टवाचकस्वर्गधेन्वादिपदं केवलसुखत्व-गोत्वाद्यवच्छिन्नतात्पर्येण[1] प्रयुज्यते तत्र लक्षणैव। शक्त्या प्रवृत्तिनिमित्तैकदेशं परित्यज्य न बोध इत्यनुभवनिर्वाहाय शुद्धतद्धर्मप्रकारकबोधे तदन्यरूपावच्छिन्नत्वानवच्छिन्नबोधविशेषविषयित्वीयप्रकारतात्वेन प्रकारता-घटितसंबन्धावगाहिशक्तिज्ञानस्य कारणत्वमुपगन्तव्यम्। शक्यताऽवच्छेदके शक्यत्वानभ्युपगन्तृमते तादृशबोधे तद्रूपांशे संकेतविशेष्यतावच्छेदकतापर्याप्त्यवगाहिज्ञानत्वेन हेतुत्वान्नातिप्रसङ्ग इति तूक्तानुपपत्त्या हेयम्।

## धेनुपदशक्तिविचारः

### प्राभाकरमतनिरूपणम्

**प्राभाकरास्तु** - धेनुपदस्य धानकर्मताविशिष्ट एव शक्तिर्न तु गोत्वमपि विशेषणम्[2] । गोत्वस्य शक्त्युपाधित्वेन शक्तिनियन्त्रकत्वात्[3], धानकर्मत्वस्य महिष्यादिसाधारणत्वेऽपि धेनुपदान्न तद्बोधः।

न च धेनुपदात् गोत्वप्रकारकबोधस्यानुभविकतया धानकर्ममहिष्यादिमति देशे "धेनुर्नास्ती"ति विशेषदर्शिनां प्रयोगस्य मुख्यतया च धेनुपदजन्यबोधे गोत्वभानमवश्यमङ्गीकरणीयम्। तथा च धानकर्मत्व इव गोत्वेऽपि शक्तेरावश्यकता। अशक्यस्यापि शाब्दबोधे भानोपगमे द्रव्यत्वप्रमेयत्वादेरपि प्रकारतया शाब्दबोधे भानापत्तिरिति वाच्यम्।

शाब्दबोधेऽशक्यस्य गोत्वादेः प्रकारतया भाने शक्यताऽवच्छेदकत्वस्य नियामकत्वात्, गोत्वस्य [4]अशक्यत्वेऽपि

---

[1] तात्पर्यात् का 1.

[2] गोत्वविशिष्टे का 1.

[3] प्रयोगोपाधिः शक्यतानवच्छेदकः, स च प्रयोगनियन्ता. उ.न.



[4] चाशक्यत्वेपि का 1.

शक्यतावच्छेदकतात्मक[1]सम्बन्धविशेषोपगमात्, द्रव्यत्वादेश्चातथात्वेन अतिप्रसङ्गविरहात्।

न च गोत्वस्य वृषभादिसाधारणस्यातिप्रसक्ततया शक्तौ नावच्छेदकतासम्भव इति वाच्यम्।

अवच्छेदकत्वस्य प्रकृतेऽनतिप्रसक्तत्वानियतत्वात्। नियतत्वे वा धानकर्मत्वसहितस्यैव तस्यावच्छेदकत्वोपगमात्।

**गोत्वमेव शक्यमिति अ.शं.**

अथ गोत्वमेव शक्यं, धानकर्मत्वमेव शक्त्युपाधिरिति वैपरीत्यमेव कुतो न स्यात्? वस्तुतो धानकर्मत्वापेक्षया लाघवेन गोत्वस्यैव शक्यत्वमुचितम्।

न च गोत्वमतिप्रसक्तं, धानकर्मत्वं तु धानकर्मव्यक्तिभेदेन भिन्नं भिन्नमिति गोनिष्ठं तदनतिप्रसक्तमिति न वैपरीत्यमिति वाच्यम्।

तस्यातिप्रसक्तत्वेऽपि शक्यत्वोपगमे क्षतिविरहात्। वृषभादिबोधस्य शक्त्युपाधिधानकर्मत्वस्यापि प्रकारतया वारणात्।

न च गोत्वस्य[2] शक्यत्वे जातिशक्त्यैव व्यक्तिलाभसम्भवेनान्यलभ्यतया गवादिपदवत् व्यक्तिशक्त्युच्छेदप्रसङ्गः; तथा च धानकर्मत्वस्य जातिनिष्ठशक्यताव्यधिकरणत्वेन शक्यताऽवच्छेदकत्वानुपपत्त्या वृषभादिबोधो दुर्वार एवेति वाच्यम्।

एतदनुरोधेनान्यलभ्यत्वेऽपि व्यक्तौ शक्तिस्वीकारादिति चेत्?

**वृषभादेरपि धेनुपदशक्यत्वप्रसङ्गेन तन्निरासः**

न, यद्धर्मविशिष्टे शक्तिस्तद्धर्माश्रयस्य यावत एव शक्यत्वनियमेन गोत्वस्य शक्यत्वे वृषभादेरपि तथात्वापत्तेः। धानकर्मत्वविशिष्टाया गोः शक्यत्वे च गोनिष्ठधानकर्मताव्यक्तीनामेव विशेषणतया, तासां च महिष्यादिव्यावृत्ततया महिष्यादेः शक्यताऽऽपत्तिविरहात् – इति **वदन्ति**।

---

[1] शक्यतायामवच्छेदकतात्मक का 1.



[2] गोत्वस्यैव का 1.

### प्राभाकरमतनिरासपूर्वकं न्यायमतोपन्यासः

तन्मते यद्यपि शक्तिज्ञानाधुनिकसङ्केतज्ञानयोः कारणताभेदेन गौरवं न बाधकम्। भगवद्विद्वेषिणां मीमांसकानां शक्तेः सङ्केतानात्मकतया तयोरेककारणतायाः कथमप्यसम्भवात्। तथाऽपि गोनिष्ठधानकर्मताव्यक्तीनामनतिप्रसक्तानुगमकरूपाभावान्न शक्यत्वप्रसङ्गः।

न च सामानाधिकरण्यसंबन्धेन गोत्वमेव धानकर्मत्व[1]सहितं धानकर्मताविशेषाणामनुगमकमिति वाच्यम्।

अशक्येन शक्यानुगमे सर्वत्रैव विशेषणशक्त्युच्छेदप्रसङ्गात्। अतिप्रसक्तेनापि धानकर्मतात्वेन विशिष्टे धानकर्मताविशेषे शक्तिग्रहोपगमे लाघवात् गोत्वविशिष्ट एव गोविशेषे शक्तिः, धानकर्मत्वमेव शक्त्युपाधिरित्येवोचितम्। अननुगतेन तत्तद्धानकर्मतात्वेन शक्तिग्रहोपगमे चापूर्वव्यक्तेरलाभप्रसङ्ग इत्यनुपपत्तिश्चिन्त्या।

## पुष्पवन्तपदशक्तिविचारः

यथा नानाधर्मविशिष्टैकधर्मिवाचकस्वर्गधेन्वादिपदात्[2] शक्तिप्रमातो नैकधर्मं परित्यज्य धर्मी प्रतीयते, तथा चन्द्रत्व-सूर्यत्वादिनानाधर्मविशिष्टनानाधर्मिवाचकपुष्पवन्तादिपदात् चन्द्रत्वादिकं परित्यज्य[3] न सूर्यत्वादिप्रकारको बोधः।

### केवलैकधर्मप्रकारकबोधप्रसङ्गः नानार्थकत्वप्रसङ्गश्च इति अ.शं.

अथात्र हरिपदशक्तिज्ञानादिव "दिवाकरः पुष्पवन्तपदवाच्य" इत्याकारकशक्तिज्ञानात्केवलसूर्यत्वप्रकारकबोधो दुर्वारः। न च

---

[1] धानकर्मत्व का 1. धानकर्मतात्व ज.

[2] वाचकपदात् का 1.

[3] न तु तादृशैकधर्मावच्छिन्नं परित्यज्य तथाविधापरधर्मावच्छिन्ने इत्यादि द्र० श.श.प्र. पृ. 263.

पुष्पवन्तादिपदशक्तिज्ञानेन सूर्यत्वादिप्रकारकशाब्दबोधजनने चन्द्रत्वादिप्रकारकशक्तिज्ञानस्यापि सहकारितोपगमान्नातिप्रसङ्ग इति वाच्यम्। [1]हर्यादिपदवन्नानार्थताग्रहदशायां भ्रान्तस्य केवलसूर्यत्वादिप्रकारकग्रहस्याप्युत्पत्तेः।

एवं तत्पदस्य हर्य्यादिपदवन्नानाधर्मावच्छिन्नवाचकतया नानार्थताप्रसङ्गो दुर्वारः। न चार्थद्वये तस्यैकस्या एव शक्तेरुपगमान्न नानार्थता; नानाशक्तिमत एव नानार्थत्वोपगमादिति वाच्यम्। शक्यताऽवच्छेदकभेदेन शक्तिभेदस्यावश्यकत्वात्, अवच्छेदकभेदस्यावच्छेद्यभेदनियतत्वात्, अन्यथा हर्यादिपदेष्वपि शक्त्यैक्यापत्तेः।

## व्यासज्यवृत्ति शक्यतावच्छेदकत्वमिति मीमांसकानुयायिमतेन समाधानम्

अत्र शक्त्याख्यपदपदार्थसंबन्धान्तरवादि[2]**मीमांसकानुयायिनः** – यथा धानकर्मत्व-गोत्वादिरूपशक्यतावच्छेदकभेदेऽपि धेन्वादिपदानां न शक्तिभेदः, अवच्छेदकताया व्यासज्यवृत्तित्वात्, तथा प्रकृतेऽपि चन्द्रत्वसूर्यत्वयोः व्यासज्यवृत्तिशक्यताऽवच्छेदकतास्वीकारान्न शक्तिभेदः, न वैकं परित्यज्यान्यप्रतीतिः। केवलसूर्यत्वादिप्रकारकबोधे केवलतद्धर्मे शक्यताऽवच्छेदकतापर्याप्त्यवगाहिज्ञानस्य हेतुत्वात्। चन्द्रत्वसूर्यत्वोभयांशे शक्यतावच्छेदकतापर्याप्त्यवगाहिज्ञानस्य चोभयप्रकारकबुद्धित्वं कार्यताऽवच्छेदकम्, अतस्तादृशशक्ति-ज्ञानाच्चन्द्रत्वावच्छिन्नान्वयबोधौपयिकयोग्यताज्ञानाद्यसत्त्वे न सूर्यत्वावच्छिन्नान्वयबोधप्रसङ्गः।

नानार्थकपदाच्च प्रत्येकधर्मावच्छिन्नस्यापि प्रतीत्या तत्र प्रत्येकमेवावच्छेदकत्वपर्याप्तेरवश्योपगन्तव्यतया शक्यताऽवच्छेदकताभेदेन शक्तिभेदः।

अथावच्छेदकताग्राहकमानेनैकधर्मिनिष्ठैकविशेष्यतानिरूपितविशेषणताऽऽपन्नेष्वेव नानाधर्मेषु अवच्छेदकतापर्याप्तिर्गृह्यते। अतो "महानसीयो नास्ति", "वह्निर्नास्ति" इत्याकारकं महानसीयत्व-वह्नित्वादिविशेषणपुरस्कारेण पृथक् पृथक् प्रतियोगिविशेषणकं[3] ज्ञानं महानसीय[1]वह्नित्वादिपर्याप्तप्रतियोगिताऽवच्छेदकताकं

---

[1] तस्य इत्यधिकं का.

[2] वादिनो का. 2. का. 1.

[3] विषयकं का.

विशेषाभावं नावगाहते; अपि तु शुद्धवह्नित्वावच्छिन्नाभावमेवेति कथं "दिवाकरनिशाकरशक्तं पुष्पवन्तपदम्" इत्यादिशक्तिग्रहे चन्द्रत्वसूर्यत्वोभयस्मिन् शक्यताऽवच्छेदकतापर्याप्तिभानं, तत्र धर्मिणोश्चन्द्रसूर्ययोर्भेदेन तन्निष्ठविशेष्यताया ऐक्यासम्भवादिति चेत्?

न, यतो यत्रावच्छेदकीभूतव्यासज्यवृत्तिधर्मान्तरधर्मिताऽवच्छेदकतया धर्मद्वयादेर्भानं तत्र भिन्नधर्मिविशेषणताऽऽपन्नेष्वपि तावद्धर्मेष्वेकावच्छेद्यता निरूपितावच्छेदकत्वपर्याप्तिः प्रतीयते। कथमन्यथा "घटपटौ न स्तः" इत्याकारकोभयत्वावच्छिन्नाभावप्रतीतौ घटपटादिरूपप्रतियोगिविषयताया भेदेऽप्यभावीयविषयताया ऐक्यात्समूहालम्बनविलक्षणायामुभयत्वादि धर्मिताऽवच्छेदकतया भासमानघटत्वपटत्वादिषु तादृशाभावप्रतियोगिताऽवच्छेदकता पर्याप्तिभानम्?

एवं च "दिवाकरनिशाकरयोः शक्तमेतत्पदम्" इत्याकारकशक्तिग्रहे विषयताया ऐक्यात्समूहालम्बनविलक्षणे बोधे[2] उभयत्वधर्मिताऽवच्छेदकताऽऽपन्न चन्द्रत्वसूर्यत्वयोः शक्यताऽवच्छेदकत्वपर्याप्तिभानमविरुद्धमिति न दोषः।

न चैवमुभयाभावप्रतियोगितायामुभयत्वस्येव प्रकृत उभयत्वस्याप्यवच्छेदक कोटिप्रवेशप्रसङ्ग इति वाच्यम्।

अभावबुद्धौ प्रतियोग्यंश उपलक्षणस्याप्रकारत्वनियमात्, उभयत्वस्य प्रतियोगिताऽवच्छेदकत्वध्रौव्यात्। शक्तिग्रहे च शक्यांश उपलक्षणस्योभयत्वस्य प्रकारत्वोपगमेन तस्य शक्यताऽनवच्छेदकत्वात्।

**उभयत्वसहितमेव चन्द्रत्वसूर्यत्वोभयं शक्यताऽवच्छेदकम् इति पक्षान्तरम्**

अस्तु वा प्रकृते उभयत्वसहितमेव चन्द्रत्वसूर्यत्वोभयं शक्यताऽवच्छेदकम्; द्वौ इत्यत्रेव पुष्पवन्तौ इत्यत्रापि प्रकृतिविभक्तिभ्यामुपस्थितस्य द्वित्वस्य[3] सकृदेव

---

[1] महानसीयत्व का.

[2] नास्ति. का.

[3] ना.का2.

भानं, विरुद्धयोरेकावच्छेदकत्वपर्याप्तिरपि घटत्वपटत्वाद्योरुभयाभाव प्रतियोगिताऽवच्छेदकत्वपर्याप्तिवत्प्रकृते न विरुध्यते।

न च "घटपटौ न स्त" इत्यत्रोभयत्व एव प्रतियोगिताऽवच्छेदकत्वं भासते; न तु विरुद्धघटत्वपटत्वादाविति वाच्यम्।

केवलोभयत्वे तादृशाभावप्रतियोगिताऽवच्छेदकतायाः पर्याप्तौ[1] यत्किंचिदुभयवति तादृशाभावप्रतीत्यनुपपत्तेः।

न च सामानाधिकरण्यसम्बन्धेन घटत्वपटत्वरूपावच्छेदकधर्मेण[2] व्यावृत्तस्यो[3]भयत्वविशेषस्यैव तत्रावच्छेदकत्वं प्रतीयत इति वाच्यम्।

तेन प्रकारेण तत्रोभयत्वस्याभानात्। तत्तद्रूपाणां तत्तद्धर्मिविशेषणतयैव भानात्। अतिप्रसक्तधर्मप्रकारेण भासमाने चावच्छेदकत्व[4]पर्याप्तिभानानुपगमात्। तत्रोभयत्वविशेषेऽभावप्रतियोगिताऽवच्छेदकतापर्याप्त्युपगमेऽत्राप्युभयत्वविशेषे शक्यता ऽवच्छेदकतापर्याप्तिसम्भवाच्चन्द्रत्वसूर्यत्वयोरवच्छेदकताऽवच्छेदकतयैव शाब्दबोधे भानोपपत्तिः।

न च "शक्यतावच्छेदकतावच्छेदकम् अवच्छेदकविशेषणतयैव भासते" इति चन्द्रत्वसूर्यत्वयोः शक्यतावच्छेदकतावच्छेदकत्वे[5] चन्द्रसूर्यांशे प्रकारतया शाब्दबोधे भानानुपपत्तिरिति वाच्यम्।

तयोः शक्यतावच्छेदकतावच्छेदकत्वेऽपि शक्तिग्रहेऽवच्छेदकाश्रय चन्द्रसूर्यविशेषणतयैव भानात्, शाब्दबोधेऽपि तद्विशेषणतया भानसम्भवात्।

अथ शक्तिग्रहे साक्षाच्छक्यतानवच्छेदकस्य तदुभयस्य शक्यचन्द्रसूर्यांशे साक्षात्प्रकारतया भानं न सम्भवतीति चेत्? "घटपटौ न स्त" इत्यादौ

---

[1] पर्याप्तत्वात् अन्यथा यत्किंचिदुभयवति तादृशाभावाप्रत्ययप्रसङ्गात् इति ज.स्खलितमिव भाति।

[2] रूपावच्छेदकतावच्छेदकधर्मेण ज.

[3] व्यावृत्तो का2.

[4] चाभावप्रतियोगितावच्छेदकत्व सं.



[5] तथात्वे का.

घटत्वपटत्वयोः साक्षात्प्रतियोगिताऽवच्छेदकत्वमन्तरेण प्रतियोगिविशेषणतया भानासम्भवस्तुल्य एवे[1]त्याहुः।

## ज्ञानशक्तिवादिमतनिरूपणम्

**ज्ञानशक्तिवादिनस्तु** – चन्द्रत्वसूर्यत्वोभयप्रकारकज्ञानमेव पुष्पवन्तपदशक्यम्, पुष्पवन्तपदमुभयप्रकारकज्ञाने शक्तम् इत्याकारकशक्तिग्रहस्य तादृशज्ञानत्वमेव कार्यताऽवच्छेदकमिति तादृशव्युत्पत्तिमतो नैकैकबोधापत्तिः, अतादृशस्य च भवत्येव तादृशो बोधः।

न चैवमपि पुष्पवन्तपदं चन्द्रत्वप्रकारकज्ञाने शक्तम् इत्यादिबोधस्य[2] प्रमात्वात् "शक्तिभ्रमं विना प्रत्येकबोधानुदय" इति कथमुपपद्यत इति वाच्यम्। केवलचन्द्रत्वादिप्रकारकबोधे तत्तत्प्रकारकबोधत्वांशे शक्तिनिरूपकता[3]ऽवच्छेदकत्वपर्याप्तिग्रहस्य हेतुत्वात्। प्रकृते तूभयप्रकारकबोधत्वांशे शक्तिनिरूपकताऽवच्छेदकत्वपर्याप्त्युपगमात्। तादृशस्य चन्द्रत्वप्रकारकज्ञाने शक्तमित्यादिज्ञानस्य भ्रमत्वनियमादित्याहुः।

## न्यायमतेन सिद्धान्तप्रतिपादनम्

वस्तुतस्तु[4] पुष्पवन्तपदाच्चन्द्रत्वावच्छिन्नविषयकसूर्यत्वावच्छिन्नविषयक शाब्दबोधो भवतु इत्याकारक एव तादृशपदे भगवत्सङ्केतः। केवलचन्द्रत्वाद्यवच्छिन्नविषयकबोधश्च न तत्पदजन्यत्वेन तद्विषय इति तादृशपदान्न तथाविधो बोधः।

न च तादृशपदजन्यत्वेन केवलचन्द्रत्वाद्यवच्छिन्नविषयकबोधस्य तादृशसंकेताविषयत्वेपि चद्रत्वावच्छिन्नविषयकबोधविषयकत्वेन सङ्केतग्रहस्य[5]

---

[1] "एव" इत्यनन्तरम् "अथ द्वित्वान्तर्भावेण पुष्पवन्तपदशक्तौ विभक्त्युपस्थापितद्वित्वानन्वयप्रसङ्ग इति चेत् एवमेव द्वौ इति द्विवचनस्य साधुत्वोपगमात्" इति कंसे मं.

[2] बोध इति न सम्यक्। ज्ञानस्य इत्येव स्यात्।

[3] अवच्छेदकता अ.क2.

[4] ज. ईश्वरेच्छारूपस्य संकेतस्य शक्तित्वमिति नैयायिकसिद्धान्तपक्षे क्र. 

[5] ज.विषयकग्रहस्य का 2.ख

चन्द्रत्वादिप्रकारकबोधजनकस्य, सूर्यत्वाद्यवच्छिन्नविषयकबोधविषयकत्वेन-सङ्केतग्रहादिघटितसूर्यत्वाद्यवच्छिन्नबोधसामग्र्यामसत्यामपि सम्भवात् तद्बलेनाभ्रान्तस्य केवलचन्द्रत्वाद्यवच्छिन्नविषयकशाब्दबोधो दुर्वार एवेति वाच्यम्।

तत्पदजन्यकेवलचन्द्रत्वादिप्रकारकबोधे तत्पदजन्यकेवलचन्द्रत्वाद्यवच्छिन्नविषयकबोधत्वपर्याप्तविषयता-ऽवच्छेदकताकत्वप्रकारकसङ्केतविषयकज्ञानस्य हेतुत्वात्। पुष्पवन्तपदजन्य बोधत्व[1]घटितभगवत्सङ्केतविषयता-ऽवच्छेदकशरीरे च सूर्यत्वावच्छिन्नविषयकत्व-चन्द्रत्वावच्छिन्नविषयकत्वयोर्द्वयोरेकत्र निवेशात्, तत्पदजन्यप्रत्येक-धर्मावच्छिन्नविषयकबोधत्वे संकेतविषयताऽवच्छेदकत्वपर्याप्तिविरहात्, तदंशे तत्पर्याप्त्यवगाहिग्रहो भ्रम एवेति न शक्तिप्रमातः प्रत्येकधर्मप्रकारकबोधापत्तिः। तत्पदजन्यचन्द्रत्वावच्छिन्नविषयक-सूर्यत्वावच्छिन्नविषयक-बोधत्वपर्याप्तविषयताऽवच्छेदकताकत्वप्रकारकसंकेतग्रहस्य च उभयधर्मप्रकारक बुद्धित्वमेव कार्यताऽवच्छेदकम्, अतो न तदुभयघटित[2]सामग्रीबलात् एकधर्मावच्छिन्नान्वयबोधस्य यत्किंचित्कारणविरहदशायाम् अपरधर्मप्रकारकशाब्द-बोधापत्तिः। उभयविषयकत्वावच्छिन्नाया बोधनिष्ठसंकेतविषयताया ऐक्याच्छक्तेरैक्यमिति न तत्पदस्य नानार्थतेति संकेतपक्षेऽपि[3] रमणीयः समाधिः।

"एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" इत्यमरकोशे उक्तिपदं शक्तिपरम्; पुष्पवन्तपदं तत्प्रतिपाद्यपरम्[4]। तथा च सूर्याचन्द्रमसावेकशक्त्या पुष्पवन्तपदप्रतिपाद्यावित्यर्थः। उद्देश्यताऽवच्छेदकावच्छेदेन विधेयान्वये तात्पर्याच्चन्द्रत्वसूर्यत्वयोरेकशक्त्यधीनप्रतिपत्तिविषयताऽवच्छेदकत्वलाभः। नातस्तस्मान्नानाऽर्थादिव तादृशैकधर्ममात्रप्रकारको बोधः; नानाऽर्थे शक्तिभेदेन विशेषादिति लभ्यते।

---

[1] का. पदजन्यत्व ज.

[2] ज. तद्घटित का.

[3] इदं नास्ति का. मं.



[4] (अत्र तृतीयविशेषणे) मं.

[1]अथ वा– एकयोक्त्या=एकोच्चारणेन, सूर्याचन्द्रमसौ पुष्पवन्तपदप्रतिपाद्यावित्यर्थः। तथा च नानाऽर्थस्थले यथा नावृत्तिमन्तरेण नानाऽर्थबोधः, तथा न प्रकृते। अत्र शक्त्यैक्येन "सकृदुच्चरितात्सकृदर्थप्रत्यय एव" इत्यस्याविषयत्वादिति भावः।

## सर्वनामपदशक्तिविचारः

## तत्पदशक्तिविचारः

पुष्पवन्तपदवत्सर्वनामपदानामपि शक्तेरैक्यान्न नानाऽर्थता।

### सर्वनाम्नां नानार्थकत्वमिति शङ्का

अथ सर्वनामपदेन विशिष्य घटत्वपटत्वादिनैव वक्तृ[2]बुद्धिस्था घटपटादयः प्रत्याय्यन्ते; न तु बुद्धिस्थत्वेन। "अत्र घटोऽस्ति तमानय" इत्यादिवाक्यजन्यघटकर्मकानयनादिबोधानन्तरं विशिष्य आनयनं घटकर्मकं न वा इति संशयानुत्पादस्य सर्वानुभवसिद्धतया दुरपवहत्वात्। तथा च वक्तृबुद्धिस्थत्वं न सर्वनामपदशक्यताऽवच्छेदकम्, अपि तु घटत्वपटत्वादिकमेवेति तादृश नानाधर्मावच्छिन्नेषु पुष्पवन्तादिपदवन्नैकशक्तिसम्भवः, एकैकधर्ममात्रप्रकारक तत्तदर्थबोधानुपपत्तेरिति सर्वनाम्नां नानाऽर्थत्वं दुर्वारमेव।

न वा नानाऽर्थतोपगमेनापि[3] निर्वाहः, यद्रूपावच्छिन्नगोचरव्यवहारजनकत्वं येन पुंसा तदादिपदे न गृहीतं तदवच्छिन्ने तेन तच्छक्त्यग्रहेण प्रक्रान्तस्यापि तदवच्छिन्नस्य तत्पुरुषीयतदादिपदजन्य बोधविषयत्वानुपपत्तेः।

न च बुद्धिस्थत्वं प्रकारीभूतघटत्वादीनामेवानुगमकम्[4]। तथा च "बुद्धिस्थप्रकारवांस्तत्पदशक्यः" इत्याकारकशक्तिग्रहः। स च

---

[1] मिश्रमतानुसारेणाह-**अथवेति** हरिनाथः।

[2] नास्ति का.

[3] ज. गमेऽपि का.



[4] ज.का2 घटत्वादीनामनुगमकम् का 1.

बुद्धिस्थत्वरूपतद्धर्मप्रकारेण[1] सामान्यप्रत्यासत्त्या सकलतद्धर्मविषयक एवेति नापूर्वधर्मप्रकारक[2]बोधानुपपत्तिः। सामान्यप्रत्यासत्त्यनभ्युपगमे तु शक्तिग्रहविशेष्यताऽवच्छेदकप्रकाराश्रयस्यापूर्वधर्मिणः शक्तिग्रहाविषयत्वेऽपि शाब्दबोधे भानवच्छक्तिग्रहधर्मिताऽवच्छेदकताऽवच्छेदकानुगत रूपाश्रयस्यापूर्वधर्मस्यापि शक्तिग्रहविषयतां विना शाब्दबुद्धौ भानं नानुपपन्नम्[3], शक्तिधियः शाब्दज्ञानसमानविषयकत्वस्यातन्त्रत्वादिति वाच्यम्।

बुद्धिस्थत्वस्य शक्यताऽवच्छेदकताऽनवच्छेदकत्वेन शक्यताऽवच्छेदकानुगमकत्वायोगात्। तदवच्छेदकत्वे च तस्यापि शाब्दबुद्धौ शक्यताऽवच्छेदकघटत्वादिविशेषणतया नियमतो भानप्रसङ्गेन[4] स्वरूपतो घटत्वादिप्रकारकशाब्दबोधानिर्वाहात्, उपलक्षणेनापि शक्यताऽवच्छेदकानुगमे शक्यस्याप्युपलक्षणेनैवानुगमोऽस्तु किं विशिष्टे शक्त्या?

अथ द्रव्यादिपदात्[5] घटत्वादिप्रकारकबोधप्रसङ्गभङ्गाय विशिष्टे शक्तिरभ्युपेयते; प्रकृते च बुद्धिस्थत्वस्योपलक्षणत्वेऽपि तेनानुगमे न किंचित् बाधकमिति चेत्?

अस्तु बुद्धिस्थत्वेनानुगतधर्मेणाननुगतानां प्रकाराणां शक्तिधीविषयत्वम्; तथाऽपि सर्वनाम्नां नानाऽर्थत्वं दुर्वारमेव। साक्षात्परंपरया वा यदवच्छेदकं तदैक्यादेवावच्छेद्यैक्यात्; बुद्धिस्थत्वस्य चातथात्वात्[6]। उपलक्षणैक्येन शक्तेरैक्ये हरिपदादिशक्यताऽवच्छेदकानामप्युपलक्षणीभूतेनान्ततो बुद्धिविशेषविषयत्वादिनाऽनुगमसम्भवेन नानाऽर्थमात्रोच्छेदप्रसङ्गात्।

**बुद्धिस्थत्वस्योपलक्षणत्वे स्वरूपतोघटत्वादिप्रकारकस्मरणानुपपत्तिः**

एवं "बुद्धिस्थप्रकारवांस्तत्पदशक्यः" इत्याकारकशक्तिज्ञानात् स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधौ न सम्भवतः। "जातिमान् हस्तिपकसम्बन्धी"

---

[1] ज. तद्धर्मप्रकारेण का.

[2] ज. अपूर्वधर्मप्रकारेण का1. अपूर्वप्रकारेण का 2.

[3] ज. न शाब्दबुद्धौ भानानुपपत्तिः का.

[4] ज. प्रसङ्गात् का.

[5] ज.का 2. पदाच्च का 1.



[6] का 1. बुद्धिस्थत्वस्यातथात्वात् का 2. कता बुद्धिस्थत्वस्यानवच्छेदकत्वात् ज.

इत्यादिज्ञानात् स्वरूपतो हस्तित्वादिप्रकारकस्मरणानुदयात्। स्वरूपतस्तद्धर्मप्रकारकस्मरणे स्वरूपतस्तद्धर्मप्रकारेण यस्य सम्बन्धो गृहीतस्तादृशसम्बन्ध[1]ज्ञानस्य हेतुत्वात्। यथा याभ्यां रूपाभ्यां[2] धर्मिणोः सम्बन्धो गृहीतस्तदेकतररूपप्रकारकसम्बन्धिज्ञानादपरतद्रूपप्रकारेणैव सम्बन्ध्यन्तर[3]स्मरणमित्यनुभवः, तथा [4]यादृशरूपाभ्यां धर्मिणोः सम्बन्धो गृहीतस्तादृशैकधर्मप्रकारकसम्बन्धिज्ञानात् तादृशापरधर्मप्रकारेणैव धर्मिस्मरणमित्यपि अनुभवः[5]। तथा च यत्र किंचिद्विशेषितधर्मप्रकारकं सम्बन्धिज्ञानं तत्राविशेषिततद्धर्मप्रकारकस्मरणस्यानुभवविरुद्धतयेष्टापत्तेरयोगात्। अन्यथा "कदाचित् स्वरूपतस्तत्प्रकारिका, कदाचिद्धर्मान्तरावच्छिन्नतत्प्रकारिका स्मृतिः" इत्यत्र नियामकाभावप्रसङ्गात्।

सामान्यलक्षणप्रत्यासत्तिमनङ्गीकुर्वतां पुनरनिष्कृतिरेव। शक्तिग्रहाविषयस्यापूर्वधर्मस्य स्वरूपतः कथमपि भानासम्भवात्। न हि बुद्धिविषयताऽवच्छेदकत्वेन धर्मान्तरविषयकं ज्ञानं स्वरूपतोऽपरधर्मप्रकारेण बुद्धिञ्जनयितुम्प्रभवति। तथा सति समानप्रकारतानियमस्यापि भङ्गप्रसङ्गादिति।

**सिद्धान्तरीत्या समाधानम्**

मैवम्। भगवत्सङ्केतरूपायां शक्तौ शक्यताऽवच्छेदकघटत्वादावुपलक्षणीभूतबुद्धिविषयताऽवच्छेदकत्व-प्रकारेण भासमाने तदादिपदजन्यबोधविषयताऽवच्छेदकत्वं भासते। एवं च "बुद्धिविषयताऽवच्छेदकधर्मावच्छिन्नस्तत्पदात् बोद्धव्यः" इत्याकारकस्य "तत्पदं बुद्धिविषयताऽवच्छेदकरूपावच्छिन्नं बोधयतु" इत्याकारकस्य वा संकेतस्य विषयताया अननुगतघटत्वपटत्वादिनिष्ठाया अप्यनुगतरूपावच्छिन्नतया[6] शक्त्यैक्यम्।

---

[1] ज. सम्बन्धि का.

[2] स्वरूपाभ्यां ज.

[3] का. सम्बन्धान्तर ज.

[4] किंचिद्विशेषितरूपाभ्याम् इत्यर्थः।

[5] ज. नास्ति का.

[6] ज. अप्यनुगतस्वप्रयोगानुकूलवक्तृबुद्धिविषयताऽवच्छेदकरूपावच्छिन्नतया का 1. स्वप्रयोगानुकूलवक्तृ ना.का2.

घटादिपदसङ्केतविषयतानां नानाघटादिव्यक्तिनिष्ठानां घटत्वाद्यनुगतधर्मावच्छिन्नत्वेन, पश्वादिपदसङ्केतविषयतानां प्रकारीभूतनानालोमादिव्यक्तिनिष्ठानां लोमत्वाद्यनुगत धर्मावच्छिन्नत्वेन तत्तत्पदशक्त्यैक्यवत्।

[1]अननुगतहरित्वसिंहत्वादिनिष्ठानां नानाहर्यादिपदसङ्केतविषयतानामनुगत किञ्चिद्धर्मावच्छिन्नत्वाभावान्न शक्तेरैक्यम्। तत्रोपलक्षणीभूतकिञ्चिद्धर्म प्रकारेणाभासमानस्यैव हरित्वादेर्भगवत्सङ्केतरूपायां शक्तौ हर्यादिपदजन्यबोध विषयताऽवच्छेदकत्वम्भासत इति न नानाऽर्थमात्रोच्छेद इति।

इयांस्तु विशेषः – तत्र घटत्वलोमत्वादिषु तत्तत्पदजन्यबोध विषयताऽवच्छेदकत्वं भासत इति तानि विशेषणान्युच्यन्ते। प्रकृते च बुद्धिविषयताऽवच्छेदकत्वे सर्वनामपदजन्यबोधविषयताऽवच्छेदकत्वं सङ्केतेन नावगाह्यते, अपि तु तादृशविषयतासामानाधिकरण्यमात्रमिति तदुपलक्षणमिति गीयते।

यद्यपि घटादिपदसङ्केतस्य घटत्वादिविशिष्टविषयकत्ववत्सर्वनामसङ्केतेन बुद्धिविषयताऽवच्छेदकत्वे तत्पदजन्यबोधविषयताऽवच्छेदकत्वानवगाहनेऽपि सङ्केतस्य तद्विशिष्टविषयकत्वमक्षतमेवेति सङ्केतविषये तद्विशेषणमेव, एवं शक्यविशेषणघटत्वादिनिष्ठे[2] बोधविषयताऽवच्छेदकत्वरूपबोधविषयता-निष्ठसङ्केतीय विषयतानिरूपितविषयतारूपशक्यत्वे तदवच्छेदकमपि, तथाऽपि बोधविषयतया सङ्केतविषयत्वरूपशक्यतायास्तत्रासत्त्वेन शक्ये न तद्विशेषणम्। शक्यत्वे सति शक्यव्यावर्तकस्यैव[3] शक्यविशेषणत्वादिति तस्य शक्योपलक्षणतया आकाशपदजन्यबोधे शब्दाश्रयत्वभानानियमवत्तदादिपदजन्यबोधे तदभाननिर्वाहः।

एतद्बीजं तु बुद्धिविषयतावच्छेदकत्वोपलक्षित[4]घटत्वादिविषयकत्वेन तदविषयक[5]घटत्वादिबोधस्यापि सङ्केतविषयत्वम्। घटादिपदसङ्केतस्य च घटत्वादिविशिष्टविषयकबोध एव विषय इति तज्जन्यबोधे तादृशधर्मभाननियमः।

---

[1] ज. इयांस्तु विशेष इतीदं वाक्यं प्रथमतः पठ्यते। ततश्चेदं वाक्यम् का1.

[2] का. निष्ठ ज.

[3] का1. शक्यव्यावर्तकशक्यस्यैव ज.का2.

[4] ज. तदुपलक्षित का. मं.



[5] (त्रितयविषयक) मं.

[1]यथा यद्विशिष्टविशेष्यकबोधविषयत्वं सङ्केतविषयः तत् शक्यताऽवच्छेदकतया व्यवह्रियते; तथा यद्विशिष्टप्रकारविशिष्टविषयकत्वं तथा, तत् शक्यताऽवच्छेदकताऽवच्छेदकमित्युच्यते। प्रकृते बुद्धिविषयताऽवच्छेदकत्वं न तथेति न तच्छक्यताऽवच्छेदकं, न वा तत्त्वावच्छेदकमिति। जातित्वादिविशिष्टघटत्वाद्यवच्छिन्नस्य तदादिपदाद्यधीनबोधे तु बोधांशे बुद्धिविषयताऽवच्छेदकताऽवच्छेदकत्वोपलक्षितधर्मविशिष्टावच्छिन्नविषयकत्वावगाही सङ्केतः प्रयोजक इति तत्र जातित्वावच्छिन्नघटत्वादिनिष्ठप्रकारताकबोध एव[2] विषय इति न तदादिपदात्[3] "जातिमान्" इत्याकारकबोधकाले "घटः" इत्याकारको बोधः।

**बुद्धिविषयत्वस्योपलक्षणता नेति शङ्का-तन्निरासौ**

अथ किञ्चित्प्रकारेण भासमाने धर्मेऽवच्छेदकताभाने तद्विशिष्ट एव भासते, न तु तदुपलक्षित इति नियमः। कथमन्यथा स्वरूपतो घटत्वावच्छिन्नाभावस्य न जातिमान्नास्तीत्याकारिका प्रतीतिः। एवं च बुद्धिविषयताऽवच्छेदकत्वोपलक्षिते कथं बोधविषयताऽवच्छेदकत्वं सङ्केतेनावगाहनीयमिति चेत्?

न। अवच्छेदकताया अवच्छेद्याश्रयविशेषणताऽऽपन्ने संसर्गविधया भान एव तथाविधनियमात्। अन्यथा "धूमव्यापकताऽवच्छेदकरूपावच्छिन्न प्रतियोगिताकाभाववान्" इत्याकारकव्यापकताऽवच्छेदकत्वोपलक्षितवह्नित्वा-वच्छिन्नाभावप्रतीत्यनुपपत्तेः।

प्रकृते च "तत्पदं बुद्धिस्थप्रकारावच्छिन्नविषयताकबोधं जनयतु" इत्याकारकोऽवच्छेद्यावच्छेदकभावप्रकारक एव सङ्केतोऽङ्गीकार्य इत्यनुपपत्ते रभावात्।

स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधाद्युपयोगी शक्तिग्रहः स्वरूपतो घटत्वादिप्रकारक एव। यदा स्वरूपतो यद्धर्मप्रकारकज्ञानसामग्री तदैव

---

[1] एतद्वाक्यद्वयं कंसे मं.

[2] प्रकारतैव का-2.

[3] ज. नास्ति का.

स्वरूपतस्तद्धर्मप्रकारेण शक्तिं गृहीत्वा स्वरूपतस्तत्प्रकारेण धर्मिणं स्मरति, अनन्तरमनुभवति च।

मानसे च शक्तिग्रहे न व्यवहारदर्शनादेरपेक्षा; अपि त्वसंसर्गाग्रहसहितोपस्थितेरेवेति यद्धर्मावच्छिन्ने तदादिपदघटितवाक्यात् व्यवहारो न दृष्टस्तदवच्छिन्नस्यापि मानसशक्तिग्रहात् बोधः सुघट एव।

**मानसशक्तिग्रहप्रकारः**

अथ व्यवहारदर्शनाद्यविषये मनसा शक्तिर्निश्चेतुं न शक्यते, विपरीतकोटेरप्युपस्थितिमात्रेण मानसज्ञाने[1] भानसंभवात्। न चोपस्थितस्यापि बाधितस्य दोषमन्तरेणाभानान्निश्चयस्याप्युपपत्तिरिति वाच्यम्। एवं सति शक्तिग्रहे व्यवहारदर्शनादेरुच्छेदापत्तेरिति चेत्?

न। – कतिपयविषयेषु[2] सर्वनामघटितवाक्यात् प्रयोज्यस्य प्रवृत्तिमुपलभमानः प्रवर्तकज्ञानविषये कतिपये[3] शक्तिं कल्पयन् बुद्धिविषयताऽवच्छेदकधर्मावच्छेदेन तत्पदशक्यशक्यत्वं[4] सामान्यतोऽवधारयति। एवं[5] "चैत्रोऽस्य बुद्धिविषयताऽवच्छेदकधर्मवान्"इति यदा तेन गृह्यते, तदानीमस्य "चैत्रस्तत्पदवाच्यो न वा"इति सन्देहो नावतरति। यादृशधर्मावच्छेदेन यदवधारितं तादृशधर्मनिश्चयस्य स्वसमानधर्मिताऽवच्छेदकक-तद्विरोधिकोटिभानविरोधित्वादिति संभवत्येवापूर्वेऽपि विषये मानसः शक्तिनिश्चयः।

न चैवमपि तद्धर्मप्रकारकबोधे तत्पदजन्यबोधविषयत्वांशे विशिष्य तद्धर्मावच्छिन्नत्वावगाहितया संकेतनिर्णयोपेक्षितः। प्रमेयत्वादिना घटा[6]दिविषयकघटपदजन्यबोधविषय[7]त्वांशे तदवच्छिन्नत्वावगाहित्वेन संकेतनिर्णयेपि

---

[1] ज.का 2.

[2] ज.का 1. न च व्यवहारदर्शनाद्यविषये मनसा शक्तिर्निश्चेतुं न शक्यते, विपरीतकोटेरप्युपस्थितिमात्रेण मानसज्ञाने भानसंभवादिति वाच्यम्। उपस्थितस्यापि बाधितस्य दोषमन्तरेणाभानान्निश्चयस्याप्युपपत्तेः। एवं सति कतिपयविषयेषु का 2.

[3] ज. ना.का 1. प्रवर्तकज्ञानविषयकतिपयविषये का 2.

[4] ज.का 2. 'बुद्धिविषयताऽवच्छेदकधर्मावच्छिन्नस्तत्पदशक्य' इत्येव का 1.

[5] ज. एवञ्च का.

[6] घटत्वा मं. 

[7] विषयि मं.

विशिष्य घटत्वावच्छिन्नत्वावगाहित्वेन संशयसंभवेन तत्प्रकारकबोधानुदयात् इति विशिष्य घटत्वा[1]द्यवच्छिन्नत्वावगाहित्वेन[2] सर्वनामसंकेत[3]निर्णयासंभवात् कथं तत्प्रकारकबोधस्ततो भविष्यतीति वाच्यम्।

बुद्धिविषयतावच्छेदकयावद्धर्मावच्छिन्नविषयकत्वावगाहिताया निर्णीतत्वात्। चैत्रत्वादेर्बुद्धिविषयता-वच्छेदकत्वग्रहस्यैव विशिष्य तदवच्छिन्नत्वावगाहितासंदेहविरोधित्वात्। न च तादृशग्रहस्य तथाविधसंदेहविरोधित्वमसिद्धमिति वाच्यम्। द्रव्यत्वे पृथिवीवृत्तिनिखिलधर्म सामानाधिकरण्यनिर्णये विशिष्य घटत्वे पृथिवीवृत्तित्वग्रहस्य द्रव्यत्वे विशिष्य घटत्वसामानाधिकरण्यसंदेहविरोधितावत् तस्यापि अनुभवसिद्धतया दुरपह्नवत्वात्। प्राचीनमतमेतत्[4]।

[5]अथैवमपि तत्पदे चैत्रत्वादिविशिष्टवाचकत्वसन्देहस्य दुरुच्छेदतया तत्पदात् व्यवहारदर्शनाविषयचैत्रत्वाद्यवच्छिन्नविषयकशाब्दबोधो दुरुपपाद एव। तद्धर्मप्रकारकशाब्दबोधे तद्धर्मविशिष्टवाचकतानिश्चयस्य हेतुत्वात्। अन्यथा गवादिपदादभ्रान्तस्यापि शक्त्या सास्नाऽऽदिमत्त्वप्रकारेण शाब्दबोधापत्तेरिति चेत्?

न। तत्पद[6]प्रयोजकबुद्धिप्रकारतया गृहीतघटत्वादिविशिष्टे व्यवहारदर्शनात् तत्पदस्य शक्तिं गृहीत्वा; यद्यत् तत्पदं[7] यादृशयादृशधर्मावच्छिन्नविषयकबुद्ध्या प्रयुज्यते तत्तत् तत्पदं[8] तादृशतादृशधर्म[9]विशिष्टशक्तमिति सामान्यतो व्याप्तिमवधारयति[10]। तदनन्तरं च

---

[1] चैत्रात्मत्वा मं.

[2] त्वस्य मं.

[3] संकेते मं.

[4] ज. न चैवमपि इत्यारभ्य पङ्क्तिसमूहद्वयं नास्ति का. 'प्राचीनमतमेतत्' इति जपाठे सदपि मूलान्तर्गततया न वेति संदेह एव। मञ्जूषायामयं पाठः। प्राचीनमतमेतत् ना.मं.

[5] कंसस्थमिदं वाक्यसमूहद्वयं न चैवमपि इति पूर्ववाक्यसमूहात्पूर्वमेव दृश्यते मं.

[6] का. तत्तत्पद ज.

[7] का 2. यद्यत्पदं ज.का1.

[8] का 2. तत्तत्पदं ज. का1.

[9] का 1.तद्धर्म का 2. ज.



[10] द्र0 ल.म. पृ.1161.

प्रत्यक्षगृहीतचैत्रत्वादिविशिष्टविषयकबुद्धिप्रयोज्यत्वं प्रकरणादिना यत्र तत्पदे[1] गृह्णाति तत्र पक्षे तादृशहेतुना चैत्रत्वादिविशिष्टवाचकत्वस्य प्रागसिद्धस्यापि पक्षधर्मताबलादनुमित्यात्मकनिश्चयेनावगाहनसंभवान्न काऽप्यनुपपत्तिरिति।

**अत्र केचिन्मतम्**

केचित्तु[2] – बुद्धिविषयताऽवच्छेदकत्वेनानुगतधर्मेण सकलधर्म विषयकसामान्यलक्षणाधीनशक्त्यनुभवा-धीनसंस्कारसत्त्वे[3] प्रमुष्टबुद्धि विषयताऽवच्छेदकत्वांशं स्वरूपतश्चैत्रत्वादिप्रकारकस्मरणं निराबाधमेवेति तन्मूलकमेव स्वरूपतोऽपूर्वचैत्रत्वादिप्रकारकं शाब्दज्ञानं भविष्यतीति किमनुपपन्नम्। स्वरूपतस्तत्प्रकारकस्मरणे स्वरूपतस्तत्प्रकारकानुभवसंस्कारयोरनपेक्षणात्, उद्बोधकवैचित्र्यादेव कदाचित् "जातिमान्" इत्याकारकं, कदाचित् "घटः" इत्याकारकं[4], कदाचित् "जातिमान् घटः"[5] इत्याकारं विलक्षणं स्मरणमिति नियमोपपत्तेः। स्वरूपतो घटत्वादिप्रकारकानुभवजनितसंस्कारवतोऽपि जातित्वादिना घटत्वादिप्रकारकात् संस्कारात्कदाचित् स्वरूपतो घटत्वाद्यप्रकारकस्य जातिमानित्याकारकस्य स्मरणस्योदयेन स्वरूपतस्तत्प्रकारिकायां स्मृतौ तथाविधानुभवसंस्कारयोर्विशिष्य हेतुत्वेऽप्युद्बोधकविशेषविरहस्य तादृशस्मृति विरहप्रयोजकताया आवश्यकत्वात् स्वरूपतस्तत्प्रकारकत्वेन[6] हेतुताया अप्रामाणिकत्वात्। कथमन्यथा विशेषणान्तरानवच्छिन्नादृष्ट[7]शरीरविशेषनिष्ठ जातिविशेषावच्छिन्नसङ्केतितरामरावणादिपदेभ्यो वाक्यार्थधीः अस्माकम्? कथं वा निर्विशेषणकातीन्द्रियजातिविशेषावच्छिन्नवाचकमनःप्रभृतिपदेभ्यः[8] शाब्दधीः?

---

[1] का. यत्पदे ज.

[2] मुरारिमिश्राभिमतप्रकारेण समाधत्ते- केचित्त्विति। इति विनोदिनी।

[3] ज. सकलधर्मविषयकसंस्कारस्य सामान्यप्रत्यासत्त्यधीनशक्त्यनुभवजन्यस्य सत्त्वे का 2. सकलधर्मविषयकसामान्यप्रत्यासत्त्यधीनशक्त्यनुभवे का1.

[4] मं.

[5] कदाचित् जातिमान् घटः इति नास्ति का.

[6] ज. इदं नास्ति। तादृशहेतुताया का.

[7] ज. च्छिन्नाऽस्मदादृष्ट का.



[8] ज. पदेभ्योऽस्माकं का.

तत्र जातित्वादिना जातिविशिष्टे शक्तिग्रहेण प्रमुष्टजातित्वांशं मनस्त्वादिप्रकारेण शक्ति[1]स्मरणमिति तत्रापि विशेषणांशप्रमोषमन्तरेण गत्यन्तराभावादिति वदन्ति।

**तद्विमर्शः**

विवदन्तेऽप्यत्र च बहवो विद्वांसः। स्मृतेर्विलक्षणप्रकारतायां संस्कारानुभवयोस्तादृशप्रकारताप्रयोजकत्वस्य उद्बोधकविशेषप्रयोजकतामाश्रित्योच्छेदने विशेष्यविशेषणभावांशेऽप्युद्बोधकविशेषस्यैव नियामकत्वसम्भवात् प्रकारत्वविशेष्यत्वानन्तर्भावेण सामान्यतस्तद्विषयकस्मृतौ तद्विषयकत्वेनैव संस्कारानुभवयोर्हेतुताऽऽपत्तेः। रामरावणादिपदेभ्यश्च लक्षणया तत्तत्पदार्थत्वादिप्रकारक एवान्वयबोधः।

वस्तुतस्तु अनुगतोद्बोधकस्थले स्वरूपतस्तत्प्रकारकशक्तिज्ञानासत्त्वेऽपि[2] स्वरूपतस्तत्प्रकारकस्मरणापत्त्या तत्र तादृश[3]ज्ञानस्य हेतुत्वमावश्यकमित्यलमतिपल्लवितेन।

## युष्मदस्मत्पदशक्तिविचारोपोद्घातः

### अननुगमप्रसङ्गशङ्का

अथ सामान्यतो वक्तृबुद्धिविषयताऽवच्छेदकधर्मावच्छिन्नस्य सर्वनामशक्यत्वे "शक्तिभ्रमं विना कालान्तरीण[4]पुरुषान्तरीय बुद्धिविषयताऽवच्छेदकधर्मावच्छिन्नविषयिका प्रतीतिः सर्वनाम्ना न जन्यते; अपि तु यो यदा यस्य बुद्धिस्थस्तदा तदुच्चरितपदात्तत्प्रकारावच्छिन्नविषयिकैव" इति नियमानुपपत्तिः। स्वोच्चारणानुकूलबुद्धिविषयताऽवच्छेदकधर्मावच्छिन्नस्य शक्तिविषयत्वे च स्वपदस्य तत्तद्व्यक्तिपरतया तत्तत्पदव्यक्तिभेदेन शक्तिभेदप्रसङ्गः, अननुगमात् व्युत्पत्तिविरोधश्च[5]।

---

[1] ज.का 2. ना. का 1.

[2] अपि नास्ति ज.का 2.

[3] तादृशेति प्रतीकमुपादाय स्वरूपतस्तत्प्रकारकज्ञानस्य इति उ.ज.

[4] कालान्तरीयपुरुषान्तरीय ज.परन्तु अग्रे कालान्तरीणपुरुषान्तरीय इत्येव ज.पाठः। कालान्तरीणपुरुषान्तरीण का. कालान्तरीय(देशान्तरीय)पुरुषान्तरीय नं.



[5] का. अननुगमाद्युपपत्तिविरोधश्च ज.

एवं "युष्मदस्मत्पदयोरात्ममात्रे न शक्तिः, अपि तु स्वसम्बोध्योच्चारणकर्त्रोरेवेति[1] सम्बोध्यतावच्छेदकत्वोच्चारयितृतावच्छेदकत्व रूपानुगतधर्मोपलक्षितचैत्रत्वादिकमेव[2] प्रवृत्तिनिमित्तम्" इत्यप्यसङ्गतम्। सामान्यतः सम्बोध्यताऽवच्छेदकत्वादेरनुगमकत्वे चैत्रस्य यद्युष्मत्पद[3]सम्बोध्यता तस्माद्युष्मत्पदात् पदान्तरसम्बोध्यमैत्रादेः, चैत्रोच्चारितादस्मत्पदात् पदान्तरोच्चारयितुश्च मैत्रादेः प्रतीतिप्रसङ्गो दुर्वार एवेति स्वजन्यबोधाऽश्रयतया प्रयोक्त्रभिप्रायविषयताऽवच्छेदकत्वरूपस्वसम्बोध्यताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्ने युष्मत्पदस्य, स्वोच्चारणकर्तृताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्ने[4] चास्मत्पदस्य शक्तेः स्वीकरणीयतया स्वत्वान्तर्भावेणाननुगमतादवस्थ्यादिति चेत्?

**अनुगमः**

न। स्वोच्चारणानुकूलबुद्धिप्रकारावच्छिन्नविषयकत्व-स्वजन्यत्वोभय सम्बन्धेन तदादिसर्वनामपदप्रकारको बोधविषयकः संकेतोऽभ्युपेयते। तत्र च[5] स्वपदार्थस्य सम्बन्ध[6]घटकतया तत्तत्पदव्यक्तित्वेन पदानां न विषयता, अपि तु तत्तत्पदत्वादिरूपानुपूर्वीविशेषप्रकारेणैवेति[7] न पदव्यक्तिभेदेन शक्तिभेदः। सामान्यतस्तत्पदत्वादिरूपानुपूर्वीविशेषावच्छेदेनैव तदुभयसम्बन्धावच्छिन्नबोधविशेष्यता[8]निरूपितसङ्केतप्रकारता ग्राह्येति न व्युत्पत्त्यनुपपत्तिः। कालान्तरीण[9]पुरुषान्तरीयबुद्धिश्च नेदानींतनैतत्पुरुषीय तदादिपदोच्चारणानुकूलेति तद्विषयताऽवच्छेदकावच्छिन्नबोधे नोपदर्शितोभय[10]सम्बन्धेनैतत्तदादिपदवैशिष्ट्यम्, अतो नेश्वरेच्छायां

---

[1] का. रेव ज.
[2] का 1. चैत्रात्मत्वादिकमेव ज. का 2.
[3] का 1. यत्पद ज.का 2.
[4] का. कर्तृताऽवच्छेदकधर्मावच्छिन्ने ज.
[5] ज.का 2. नास्ति का 1.
[6] संबन्धा का2.
[7] ज.का 2. विशेषेणैवेति का 1.
[8] ज. विषयता का.
[9] ज.का. 
[10] ज. दर्शित का.

तादृशबोधस्यैतत्तदादिपदप्रकारेण भानमिति न कालान्तरीणपुरुषान्तरीयबुद्धिविषयता-ऽवच्छेदकावच्छिन्नस्यैतत्तदादिपदवाच्यता। भगवत्संकेतीयतत्पदव्यक्तिप्रकारतानिरूपिततथाविधसंसर्ग-विषयतान्तःपाति[1]बुद्धि विषयताऽवच्छेदकावच्छिन्न[2]विषयताया एव तत्पदवाच्यतारूपत्वात्। अतो न भ्रमं विना तदवच्छिन्नबोधः। तद्धर्मावच्छिन्नविषयताशालिबोधे पदांशे तद्धर्मावच्छिन्नविषयताघटितोक्तोभय[3]सम्बन्धावच्छिन्नाया बोधनिष्ठ विशेष्यतानिरूपितसङ्केतीयप्रकारताया वाचकतारूपायाः[4] प्रकारतया संसर्गतया वा ज्ञानस्य हेतुत्वात्, अन्यधर्मावच्छिन्नं बुद्धिस्थीकृत्य प्रयुक्ते पदेऽन्यधर्मावच्छिन्नविषयताघटितोभयसम्बन्धावच्छिन्नसङ्केतीयप्रकारताया असत्त्वेन तत्र तदवगाहिज्ञानस्य भ्रमत्वनियमात्।

युष्मदस्मत्पदस्थले[5]ऽपीदृश्येव गतिश्चिन्तनीया।

## युष्मत्-अस्मत्पदशक्तिविचारः

**स्वसम्बोध्योच्चारयित्रादेः युष्मदस्मत्पदार्थत्वाभावः**

अथ स्वसम्बोध्ये युष्मदः, स्वोच्चारयितरि चास्मदः शक्तौ,

"देव्युवाच– मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः।"

इत्याद्यृष्यादिवाक्यात् देवीकर्तृकमहिषासुरकर्मकघातादिबोधानुपपत्तिः। तत्र देव्युच्चरितत्वस्य महिषासुरसम्बोध्यत्वस्य चाभावात्। ऋषि[6]कर्तृकसुरथकर्मकघातादिबोधस्य च योग्यताभ्रमादापत्तिश्च, ऋष्यादेस्तादृशवाक्यप्रयोक्तृत्वात्सुरथादेश्च तत्सम्बोध्यत्वादिति चेत्?

[1] ज. संसर्गान्तःपातिन्या का 1. संसर्गविषयतान्तःपाति का 2.

[2] ज.का 2. च्छिन्नत्वेन का 1.

[3] का. विषयतोभय ज.

[4] का. प्रकारतारूपवाचकतायाः ज.

[5] ज. युष्मदस्मत्स्थले का.



[6] ज. ऋष्यादि का.

न। तत्र तादृशानुपूर्वीप्रकारेण सामान्यप्रत्यासत्त्या देव्यादिवाक्यस्यापि ज्ञानात् देवीमहिषासुरयोस्तादृशवाक्यप्रयोक्तृत्व-सम्बोध्यत्वप्रतिसंधानादेवास्मद्युष्मद्भ्यां देवीमहिषासुरादिप्रतीत्युपपत्तिः।

यदि च तत्र वक्त्रनुवादवाक्ययोर्विभिन्नैवानुपूर्वी, तदाऽनुवाद[1]वाक्ये तद्व्यक्तित्वादिना विशेषदर्शनेऽप्यानुपूर्वीप्रकारेण देव्युच्चरितत्वादिभ्रमादेव श्रोतुर्देव्यादिप्रतीतिस्वीकारेणानुपपत्त्यभावात्।

यत्र च तादृशानुपूर्वीविशेषावच्छेदेनापि विशेषदर्शनं तत्र नेष्यत एव तत्प्रतीतिरिति[2]।

**स्वतन्त्रोच्चारणविशेषणदानम्**

एवमन्यदीयस्वार्थतात्पर्यकोच्चारणानधीनोच्चारणरूपं स्वतन्त्रोच्चारणमस्मत्पदप्रवृत्तिनिमित्तानुगमकम्। उक्तस्थल ऋष्याद्युच्चारणं च न तथा, तस्य स्वार्थ[3]प्रतिपादनद्वारा देव्युच्चारणाधीनत्वादिति नास्मच्छब्दादृष्यादिबोधः।

स्वातन्त्र्येण "अहं गच्छामि" इत्युच्चारणस्यापि "को गच्छति" इत्यादिप्रश्न[4]वाक्य[5]-शक्तिग्राहकवाक्योच्चारणाधीनतया स्वार्थतात्पर्यकत्व[6]मुच्चारणविशेषणम्। प्रश्नवाक्यस्य च "अहं गच्छामि" इत्यादिप्रकृतवाक्यतात्पर्यविषयपरत्वाभावात् तदुच्चारणे विशिष्टव्यतिरेकः सुघटः।

**आनुपूर्व्या सजातीयोच्चारणानधीनत्वनिवेशनासंभवः**

आनुपूर्व्या[7] सजातीयं यद्वाक्यान्तरं[8] तदुच्चारणानधीनत्वं च निवेशयितुमशक्यम्[9]। शब्दानुकरणस्थल एव समानानुपूर्वीकोच्चारणापेक्षानियमात्।

---

[1] ज. वादक का.

[2] ज. तत्प्रतीतिः का.

[3] ज. अर्थ का.

[4] का. प्रश्ने ज.

[5] प्रश्नवाक्यं शक्तिग्राहकवाक्यं चेति द्वयम्। तदधीनतया इत्यर्थः।

[6] ज. परत्व का.

[7] ज.का 2.पूर्वी का 1.

[8] ज.का 2. व्यक्त्यन्तरं का 1.



[9] तदुच्चारणे निवेशयितुमशक्यमित्यर्थः उ.ज.

वाक्यार्थानुवादस्थले समानार्थकवाक्यमात्रोच्चारणापेक्षणात् तत्र स्वातन्त्र्यापत्तेर्दुर्वारत्वात्।

## प्रकारान्तरेण स्वतन्त्रोच्चारणपदार्थनिरूपणम्

वस्तुतस्तु वाक्यान्तरस्थक्रियाकर्मतापन्न स्वघटितवाक्यार्थप्रत्यायनेच्छा[1]ऽनधीनं स्वोच्चारणमेव स्वतन्त्रोच्चारणम्। अनुवादस्थले च "इत्युवाच" इतिवाक्यान्तरस्थक्रियाकर्मतया तदर्थघटितवाक्यार्थं प्रतिपादयितुमेवानुवादकोऽस्मद्घटितवाक्यं प्रयुङ्क्ते इति न स्वातन्त्र्यम्। "मां[2] पश्य" इत्यत्र प्रकृतवाक्यस्थज्ञानरूपक्रियाकर्मतया स्वं प्रतिपादयितुमेवास्मदः प्रयोगात्तदुच्चारणस्य स्वातन्त्र्यनिर्वाहाय वाक्यान्तरेति।

एतेन, यत्र चैत्रेणान्यदीयात् "चैत्रः सुन्दरः" इत्यादिवाक्यादेव वाक्यार्थं प्रतीत्य "अहं सुन्दरः" इति प्रयुज्यते, तत्र स्वसमानार्थकवाक्योच्चारणसापेक्षत्वेऽपि न स्वातन्त्र्यक्षतिः, न वा स्वपाण्डित्याभिमानिमौनिपुरुषज्ञानपरस्य "अयम् 'अहं पण्डित' इति जानाति" इत्यन्यदीयोच्चारणस्य स्वातन्त्र्यापत्तिः।

## स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थक्रियाकर्तरि अस्मदः शक्त्यन्तरम्

अथैवं रीत्याऽव्यवहितोक्तस्थलेऽहंपदेनोच्चारयितृपुरुषविषयकप्रतीतिवारणेऽप्यभिमानिनस्ते न प्रत्ययो दुरुपपाद एव, तस्योच्चारणाभावेनास्मत्पदा[3]वाच्यत्वादिति चेत्?

सत्यम्। स्वतन्त्रोच्चारयितुः सर्वत्रास्मदर्थत्वे स्यादेवेय[4]मनुपपत्तिः। तदेव न, स्वतन्त्रोच्चारितास्मत्पदस्यैव तद्वाचकत्वात्। निरुक्तस्वतन्त्रोच्चारणरहितस्य अस्मत्पदस्य[5] स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थक्रियाकर्तर्येव शक्तिः। एवञ्च "मया त्वयि हतेऽत्रैव" इत्यादौ तादृशक्रिया "देव्युवाच"

---

[1] का. क्रियाकर्मतापन्नवाक्यार्थघटकतया स्वार्थप्रत्यायनेच्छा ज.

[2] मत्पुत्रं का2.

[3] अस्मद् का2.

[4] का. चेदिय ज.



[5] ज. चास्मदः का.

इतिवाक्यान्तरस्थोक्तिक्रियैव, तत्कर्तृत्वं देव्या इति पूर्वोक्तभ्रमं विनैव तत्प्रतीतिरुपपादयितुं शक्यते। स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थक्रियात्वं च तादृशार्थकर्मकत्वेन वाक्यान्तरप्रतिपाद्यत्वम्। तेन "'अहं पण्डित' इति विद्वांसं पश्य" इत्यादौ दर्शनादिक्रियाया अस्मच्छब्दघटितवाक्यार्थविषयकत्वसंभवेऽपि तेन रूपेण समभिव्याहृतवाक्यान्तराप्रतिपाद्यतया न तत्क्रियाकर्त्तुरस्मच्छब्दतः प्रतीतिः।

**अन्योन्याश्रयनिरासः**

अथ इतिपदघटितवाक्यान्तरात् क्रियाप्रतिपत्तावेव तत्कर्तुर्वाक्यान्तरप्रतिपाद्यक्रियाकर्तृत्वं सुग्रहम्; तद्ग्रह एव च तद्घटितानुगमकग्रहेण[1] अस्मच्छब्दशक्तिग्रहेऽस्मच्छब्दघटितवाक्यात् वाक्यार्थ[2]प्रतीतौ तस्य इतिपदादुप[3]स्थित्या वाक्यान्तरक्रियाप्रतिपत्तिरित्यन्योन्याश्रय इति चेत्?

न। वाक्यान्तरप्रतिपाद्यतया[4] वक्तृबुद्धिस्थत्वस्यैव क्रियायां विशेषणत्वोपगमात्, प्रतिपत्तेः पूर्वमपि प्रकरणादिना[5] तादृशवक्तृबुद्धेर्ग्रहसंभवेनान्योन्याश्रयानवकाशात्।

स्व[6]घटितवाक्यार्थविषयकत्वान्वितक्रियाकर्तृतया वाक्यान्तरप्रतिपाद्यत्वेन या वक्तृबुद्धिस्तद्विषयता-ऽवच्छेदकत्वं प्रवृतिनिमित्तानुगमकमिति तु सारम्। एवं[7] बुद्धिविषयताऽवच्छेदकत्वस्य प्रवृत्तिनिमित्तानुगमकत्वप्रवादोऽपि संगच्छते।

उच्चारणकर्तृत्व ानुगमक[8]शरीरेऽपि मिश्राणां बुद्धिस्थत्वनिवेशबीजं तु नावधारयामः।

---

[1] ज. रूपग्रहेण का. मं.

[2] ज.का2. घटितवाक्यार्थ का1.

[3] का. अनुप ज.

[4] ज. का 2. वाक्यान्तरजन्यत्वोपरक्तप्रतिपत्तिविषयतया का 1.कंसस्थं मं.

[5] ज. प्रकारणादिना का 2. नास्ति का 1.

[6] ज. का2. स्वार्थ का1.

[7] च का. 

[8] का. कर्तृत्वगर्भानुगमक ज.

**स्वसंबोध्यत्वपदार्थनिरूपणम्**

एवं युष्मत्पदप्रवृत्तिनिमित्तानुगमक[1]निविष्टं स्वसम्बोध्यत्वमपि वाक्यान्तरस्थक्रियाकर्मत्वेन स्वघटितवाक्यार्थानवगाहिनी या स्वजन्यप्रतीतिस्तदाश्रयत्वेनेच्छाविषयत्वम्[2]। अनुवादकेन यः सम्बोध्यते स नानुवादकोच्चारितयुष्मच्छब्दनिरूपितनिरुक्तसम्बोध्यतावान्, तस्य[3] अनुवादक पुरुषीयवाक्यार्थकर्मकोक्तिक्रियाघितमहावाक्यार्थघटकयुष्मदर्थघटितावान्तरवाक्यार्थ प्रतीत्याश्रयत्वेन अभिप्रायविषयत्वेपि तादृशाभिप्राये तादृशावान्तरवाक्यार्थस्य वाक्यान्तरस्थोक्तिक्रियाकर्मत्वेनैव[4] भानात्। [[5]वक्तृप्रतिपाद्यतया युष्मदर्थघटितवाक्यार्थकर्मकोक्तिक्रियाविषयकप्रतिपत्त्याश्रयत्वेनैव तस्यानुवादकेच्छाविषयत्वात्। ]

यदि च इतिपदघटितवाक्यार्थप्रतीतिरूपफलेच्छाऽधीना युष्मदर्थ[6]घटित वाक्यार्थप्रतीतिविषयिणी तादृशवाक्यार्थांशे वाक्यान्तरस्थक्रियाकर्मत्वानवगाहिन्यपि[7] तादृशवाक्योच्चारणानुकूलाऽनुवक्तु[8]रिच्छा सम्भवतीति तादृशेच्छामादायानुवादक सम्बोध्यस्य सम्बोध्यताऽऽपत्तिरिति मन्यते? तदा वाक्यान्तरार्थप्रतीतीच्छाऽनधीनत्वमपीच्छाविशेषणं देयमिति "मया त्वयि हतेऽत्रैव" इत्यादौ युष्मच्छब्दात्[9] न सुरथादिविषयकप्रतीतिः।

---

[1] ज. गमकगर्भ का.

[2] स्वघटितवाक्यार्थानवगाहिनी या स्वजन्यप्रतीत्याश्रयत्वेनेच्छा तद्विषयत्वम् का2.

[3] एतावत्पर्यन्तं ना.का2. उत्तरभागः का1.पुस्तके नास्ति। यदि चेत्यादिना आरभ्यते। तत्स्थाने "वक्तृप्रतिपाद्यतया युष्मदर्थघटितो यो वाक्यार्थकर्मकोक्तिक्रियाघटितवाक्यार्थः तद्विषयकत्वविशिष्टप्रतिपत्त्याश्रयत्वेनैव तस्यानुवादकेच्छाविषयत्वात्" इति। "तस्यानुवादक" इत्यारभ्य "क्रियाकर्मत्वेनैव भानात्" इतिपर्यन्तं कंसे. "वक्तृप्रतिपाद्यतया युष्मदर्थघटितो यो वाक्यार्थ(कर्मकोक्तिक्रियाविषयक)घटितवाक्यार्थः तद्विषयकत्वविशिष्टप्रतिपत्त्याश्रयत्वेनैव तस्यानुवादकेच्छाविषयत्वात्" मं.

[4] ज. त्वेन भानात् का 2.

[5] ज. इदं वाक्यं नास्ति का 2.

[6] युष्मद् का2.

[7] का. वक्तृप्रतिवाद्यत्वानवगाहिन्यपि ज.

[8] का. वक्तुः ज.

[9] ज.नास्ति का.

**वाक्यान्तरस्थ-स्वघटितवाक्यार्थकर्मकक्रियाकर्मण्यपि युष्मदः शक्तिः**

एवमभ्रान्तस्य ततो महिषासुरादिप्रतीतिनिर्वाहाय वाक्यान्तरस्थ-स्वघटितवाक्यार्थकर्मकक्रियाकर्मण्यपि युष्मदः शक्त्यन्तरं स्वीकरणीयम्। ततो[1] "देवी महिषासुरम् इत्युवाच" इत्यादिवाक्यस्थक्रियाकर्मत्वं महिषासुरादेरिति तस्यापि "त्वयि" इत्यादिशब्दार्थतोपपत्तिः।

अत्रापि पूर्ववत् स्वघटितवाक्यार्थविषयकत्वान्वितक्रियाकर्मतया वाक्यान्तरप्रतिपाद्यत्वेन या वक्तृबुद्धिस्तद्विषयताऽवच्छेदकत्वेनानुगतानां [2]महिषासुरत्वादीनां प्रवृत्तिनिमित्तत्वं बोध्यम्।

सम्बोध्यत्वघटितानुगमकशरीरे च बुद्धिविषयताऽवच्छेदकत्वनिवेशनं **मिश्रो**क्तमनुपादेयमेव। सम्बोध्यताऽवच्छेदके बुद्धिप्रकारत्वस्याव्यावर्तकत्वात्।

**स्वातन्त्र्यविशेषणत्यागः**

अथ तात्पर्यसत्त्वे "'अहमत्रास्मि' इति मैत्रो जानाति" इत्यादिचैत्रवाक्यस्थास्मच्छब्दाच्चैत्रोऽपि प्रतीयते। तत्र चैत्रस्य स्वघटितवाक्यार्थकर्मकक्रियाकर्तृत्वाभावात् तदुच्चारणस्य निरुक्त स्वातन्त्र्याभावाच्चानुपपत्तिः। एवं "'मैत्र, त्वया भुक्तम्' इति मया श्रुतम्" इत्यत्र मैत्रस्य युष्मच्छब्देन प्रत्यायनात्तस्य च वाक्यान्तरस्थक्रियाकर्मत्वस्य, निरुक्तेच्छाविषयत्वरूपसम्बोध्यत्वस्य चाभावात्कथमुपपद्यतामिति चेत्?

तर्हि न स्वातन्त्र्यमुच्चारणविशेषणम्। सम्बोध्यत्वघटकेच्छायां निरुक्तेच्छाऽनधीनत्वादिविशेषणञ्च त्याज्यमेव। "मया त्वयि हतेऽत्रैव" इत्यादौ तात्पर्यविरहादेवानुवादकतत्सम्बोध्ययोः "मया त्वयि हत" इत्यादिनाऽप्रतिपादनोपपत्तेः।

न चैवं बुद्धिविषयताऽवच्छेदकरूपावच्छिन्न[3] एव युष्मदस्मदोरपि शक्तिरास्ताम्; किं सम्बोध्यत्वोच्चारयितृताऽवच्छेदकावच्छिन्ने शक्तिस्वीकारेण? तात्पर्यादेवातिप्रसङ्गभङ्गादिति वाच्यम्।

---

[1] ज. तत्र का.

[2] ज. चैत्रत्व इत्यधिकं का 1. चैत्रत्वादीनां का 2.



[3] ज.का 2. च्छेदकावच्छिन्न का 1.

तात्पर्यसत्त्वेऽपि चैत्रोच्चरितात् "अहं करोमि" इतिवाक्यात्, चैत्रं बोधयितुं प्रयुक्तात् "त्वं गच्छ" इत्यादिवाक्याच्चोच्चारयितृत्व-सम्बोध्यत्वभ्रमं विना मैत्रादेर्बोधस्य सर्वानुभवविरुद्धत्वात्, अन्यथा तत्तात्पर्येण स्वरसत एव तथाप्रयोगापत्तेः।

**सम्बोध्योच्चारणकर्त्रोरेव युष्मदस्मदोः शक्तिः इति पक्षान्तरम्**

इदं त्ववधेयम्[1] – "अयम् 'अहं पण्डितः' इति जानाति", "इत्युवाच" इत्यादिस्थले सर्वत्र वाक्यार्थस्य कर्मता न सम्भवति। बाधितवाक्यार्थस्थले तदसम्भवात्।

न च बाधितवाक्यार्थस्थले भ्रमरूपैव तत्कर्मत्वप्रतीतिरिति वाच्यम्। विशेषदर्शिनाऽपि भ्रान्तिज्ञेन तथा प्रयोगात्, तस्य च वाक्यार्थज्ञानासम्भवेन तदनुपपत्तेः।

न चाहार्यवाक्यार्थज्ञानादेव, विनाऽपि विशिष्टवाक्यार्थबुद्धिं विशेषणप्रकारकत्वविशेष्यविशेष्यकत्वाभ्यां विशिष्टज्ञानज्ञानादेव[2] वा विशेषदर्शी तथा प्रयुङ्क्ते इति वाच्यम्।

एवमपि विशेषदर्शिनो भ्रान्तिज्ञपुरुषीयतथाविधवाक्याच्छाब्दबोधा[3]नुपपत्तेर्वज्रलेपत्वात्। तस्मात्तत्र इतिपदं न तद्वाक्यप्रतिपाद्यताऽवच्छेदकीभूततद्धर्मावच्छिन्नपरम्; अपि तु तद्वाक्यजन्यज्ञानसमानाकारकपरम्। तादृशश्च इतिपदार्थोऽभेदसम्बन्धेन यथासंभवं धात्वर्थे धात्वर्थतावच्छेदके च ज्ञाने विशेषणमित्येवोपगन्तव्यम्। तथा च सर्वत्रैव युष्मदस्मद्घटितावान्तरवाक्यस्थल इतिपदं तत्परमेव। तादृशवाक्येन च[4] "गवित्ययमाह" इत्यादौ गवादिपदवत्स्वरूपमेवेतिशब्देन परामर्शार्थं समुपस्थाप्यते; न तु युष्मदस्मच्छब्दार्थघटितो वाक्यार्थ इति सम्बोध्योच्चारणकर्त्रोरेव युष्मदस्मदोः शक्तिरिति।

---

[1] ज. अवधातव्यम् का 2. तत्त्वम् का 1.

[2] का. ज्ञानादेव ज.

[3] का. वाक्यार्थबोधा ज.



[4] ज.का 2. वा का 1.

### शरीरात्मनोरुभयोरेव युष्मदस्मत्पदार्थता

"त्वं स्थूलः", "अहं स्थूलः", "त्वं स्वर्गं भोक्ष्यसे", "अहं स्वर्गं भोक्ष्ये" इत्युभयत्रैव युष्मदस्मदोर्मुख्यत्वात्सम्बोध्योच्चारयितृशरीरतदात्मनोरेव युष्मदस्मदर्थता बोध्या।।

## सर्वपदशक्तिविचारः

### अशेषत्वं सर्वपदार्थः इति पक्षः

"सर्वे घटा रूपवन्तः" इत्यादौ सर्वपदादुद्देश्यताऽवच्छेदकीभूत घटत्वावच्छिन्नस्याशेषताप्रतीतेरशेषत्वं सर्वपदार्थः।

### अशेषत्वविकल्पानां निरासः

नन्वत्राशेषत्वं न विधेयशून्यावृत्तितदुद्देश्यताऽवच्छेदकवत्त्वम्। केवलान्वयिनो यत्र विधेयता तत्र विधेयशून्यत्वस्याप्रसिद्धेः। यत्र[1] वा विधेयशून्ये उद्देश्यताऽवच्छेदकीयसम्बन्धविशेषेण वृत्तेरप्रसिद्धिः, तत्र "सर्वे घटा जातिमन्तः" इत्यादौ गत्यन्तराभावापत्तेः। पदान्तरादुपस्थिते उद्देश्यताऽवच्छेदक घटत्वादिविशिष्टे सर्वपदोपस्थाप्यविधेयव्याप्तिविशिष्टघटत्वाद्यवच्छिन्नस्य कथंचिदन्वय सम्भवेऽप्यनुभवविरोधाच्च। घटत्वत्वाद्यनुपस्थितिदशायामपि "सर्वे घटाः" इत्यादिवाक्यादन्वयबोधस्यानुभविकतया व्याप्यत्वेनैव घटत्वादेः सर्वपदार्थत्वस्य स्वीकरणीयतया तज्जन्यव्याप्तिबोधस्य[2] निर्धर्मिताऽवच्छेदककतया विपरीतविषयक संशयाद्यविरोधित्वेनाकिञ्चित्करतापाताच्च।

नापि तत्तदुद्देश्यताऽवच्छेदकव्यापकतत्तद्विधेयवत्त्वम्। तदवच्छिन्ने विधेयानन्वयप्रसङ्गात्।

नापि विधेयान्वयि[3]व्यापकतापर्यन्तमेव सर्वपदार्थः। नामार्थद्वयोर्भेदान्वयबोधस्याव्युत्पन्नत्वात्।

---

[1] "सर्वे घटा जातिमन्तः" इत्यादौ उ.ज.

[2] का. बोधस्य ज.



[3] का. घटत्वादि इत्यधिकं ज.

नाप्यभेदेन रूपवदाद्यात्मकविधेयान्वयी घटत्वादिव्यापक एव तदर्थः। तथा सति "सर्वे वेदाः प्रमाणम्" इत्यादौ सर्वपदस्य प्रमाणपदेनैव सामानाधिकरण्यात्तत्समानलिङ्गवचनकत्वापत्तिः।

"सर्वे घटा वर्तन्ते" इत्यादौ क्रियारूपविधेये व्यापकस्याभेदान्वये सर्वपदस्य नपुंसकत्वापत्तेः। व्यापकताया भेदान्वयोपगमे नामार्थधात्वर्थयोर्भेदान्वयविरहनियमभङ्गापत्तेः।

**अनेकत्वं सर्वपदार्थ इति मतस्य निरासः**

यत्तु — अशेषत्वं न सर्वपदार्थः।उद्देश्यताऽवच्छेदकावच्छेदेन विधेयान्वयोपगमादेव तल्लाभोपपत्तेः; किन्त्वनेकत्वमेव। अनेकत्वं चोद्देश्यताऽवच्छेदकसमानाधिकरणभेदप्रतियोगित्वम्। अत एव "सर्वं गगनं शब्दवत्" इत्यादयो न प्रयोगाः। एवं च "सर्वे घटाः" इत्यादौ घटनिष्ठान्योन्याभावप्रतियोग्यभिन्ना घटा इत्ययमर्थः प्रतीयते। न चैवं घटत्वादिसामानाधिकरण्यमात्रेण विधेयान्वयतात्पर्येण "सर्वे घटा नीलाः" इत्यादिप्रयोगापत्तिः? "सर्वपदार्थविशेषिते उद्देश्यताऽवच्छेदकावच्छेदेनैव विधेयान्वयः" इति नियमात्। "सर्वं प्रमेयम्" इत्यादौ प्रमेयत्वादिविधेयके उद्देश्यवाचकवस्त्वादिपदमध्याहृत्यैव प्रतीतिः; अन्यथोद्देश्यताऽवच्छेदकीभूतव्याप्यधर्मानुपस्थित्या तद्व्यापकत्वार्थकत्वेऽप्यनुपपत्तिः — इति।

तदपि न युज्यते। गगनादावपि द्वित्वाद्यवच्छिन्नतद्भेदसत्त्वेन सर्वपदस्यानेकार्थत्वमुपगम्यापि "सर्वं गगनम्" इत्यादिप्रयोगस्य दुर्वारत्वात्। तत्तदुद्देश्यताऽवच्छेदकसमानाधिकरणभेदप्रतियोगिताऽवच्छेदकत्वस्य तत्तदुद्देश्यताऽवच्छेदके सर्वत्र बाधितत्वेन तत्प्रतीतेर्दुरुपगमत्वात्। [1]सामान्यतः

---

[1] सामान्यतः प्रतियोगिवृत्त्यन्यत्वस्य भेदे विवक्षया गगने अनेकत्ववारणेपि प्रतियोगिवृत्त्यन्यत्वस्य वृत्तिमदवृत्तित्वात्। सर्वस्यापि येन केनचित् प्रकारेण प्रतियोगिवृत्तित्वसंभवात्।

प्रतियोगिवृत्त्यन्यत्वस्य वृत्तिमदवृत्तित्वात्। स्वप्रतियोगिवृत्तयो ये ये तादृशभेदास्तद्भेदकूटस्य च दुरवगमतया तद्विशेषणेन द्वित्वाद्यवच्छिन्नभेदव्यावृत्तेरपि हेयत्वात्।

अस्तु वा यथाकथञ्चित्तद्व्यावृत्तिः। तथाऽप्यनेकत्वमात्रस्य सर्वपदार्थत्वेऽवच्छेदकावच्छेदेनान्वयेऽवच्छेदकैकदेशव्यापकताबोधस्यानुभवविरुद्धतया "सर्वे घटा रूपवन्तः" इत्यादौ घटनिष्ठभेदप्रतियोगिघटत्वस्य[1] उद्देश्यताऽवच्छेदकतया शुद्धघटत्वादिव्यापकत्वभानानुपपत्त्या घटत्वसामानाधिकरण्येन रूपादिमदन्यत्वनिश्चयदशायामपि तादृशवाक्याच्छाब्दबोधापत्तिर्दुर्वारैव।

**सर्वेषु घटेषु रूपम् इत्यत्र विशेष्यतावच्छेदकव्यापकत्वभानासंभवः**

एवं विशेष्यताऽवच्छेदकव्यापकताया एव विशेषणसंसर्गांशे संसर्गविशेषणीभूतविशेषणांशे वा भानात् "सर्वेषु घटेषु रूपम्" इत्यादौ घटत्वादेर्विशेष्यताऽनवच्छेदकत्वेन रूपादौ तद्व्यापकत्वभानं दुर्लभमापद्येत।

न च तत्र सप्तम्यर्थाधेयत्वादौ निरूपकतासम्बन्धावच्छिन्नव्यापकतासम्बन्धेनैव प्रकृत्यर्थस्य घटादेरन्वयः स्वीक्रियते; घटादेर्व्याप्यता[2] च तादात्म्यसंबन्धेन; व्यापकता च यादृशरूपावच्छिन्ने आधेयत्वादेरन्वयस्तदवच्छिन्ननिष्ठाधेयतात्वाद्यवच्छिन्ना संसर्गः[3]। अतो रूपनिष्ठाधेयत्वादेराधेयतात्वादिना द्रव्यत्व[4]व्यापकत्वेऽपि नातिप्रसङ्गः। एवं रूपनिष्ठाधेयतात्वा[5]दिनाऽऽधेयत्वादेः पदादनुपस्थितत्वेऽपि न क्षतिः। तथा सत्यपि तादृशरूपस्य संसर्गघटकतया भाने विरोधाभावादिति वाच्यम्।

उक्तव्यापकतायाः संसर्गत्वे मानाभावात्।

अस्तु वोद्देश्यविधेययोर्विशेष्यविशेषणभाववैपरीत्येऽपि विधेयांश उद्देश्यताऽवच्छेदकव्यापकत्वस्य उद्देश्यविधेयभावमहिम्नैव संसर्गतया भानम्;

---

[1] का 2. योगित्वस्य घटत्वस्य च ज. योगित्वस्य का1.

[2] घटादेर्विशेष्यता च का2.

[3] धेयतात्वसंसर्गावच्छिन्ना का2.

[4] द्रव्यादि का2.



[5] एवं ना. रूपनिष्ठाधेयत्वा का2.

भवतु चोद्देश्यविशेषणतयोपस्थितस्यापि विधेये पारतन्त्र्येणान्वयो व्युत्पत्त्यविरुद्धः; नामार्थयोरपि भेदेन पारतन्त्र्येणान्वयो व्युत्पत्त्यविरुद्धः[1], तथाऽपि सर्वपदस्य यत्र विधेयवाचकपदसामानाधिकरण्यं तत्र विधेयांशे[2] उद्देश्यस्य तत्संबन्धस्य वाऽनुभवसिद्धो व्याप्तिबोधो दुरुपपादः[3]।

एवं "घटे न सर्वाणि रूपाणि, अपि तु कानिचिदेव" इत्यादौ रूपनिष्ठभेदप्रतियोगिरूपत्वावच्छिन्नाभावो घटादौ बाधित एवेत्ययोग्यताऽऽपत्तिः।

न च तत्र तादृशरूपत्वादिसामानाधिकरण्येन घटादिवृत्तित्वाभावः प्रतीयते, स चाबाधित एव, नञ्समभिव्याहारस्थलेऽशेषत्वभानानुपगमे क्षतिविरहादिति वाच्यम्। एवं सति तत्र घटत्वावच्छिन्नस्योद्देश्यत्वानिर्वाहात्। न च तत्र रूपस्योद्देश्यत्वम्। प्रथममनिर्दिष्टत्वात्।

**यावत्त्वं सर्वपदार्थ इति गदाधरमतम्**

अत्रोच्यते। उद्देश्यताऽवच्छेदकव्यापकविधेयव्याप्यपर्याप्तिको धर्मः सर्वपदप्रवृत्तिनिमित्तम्। "सर्वे घटा रूपवन्तः" इत्यादौ तथाविधधर्मो घटादिनिष्ठयावत्त्वमेव। तस्य च व्यासज्यवृत्तितया तत्पर्याप्तेर्घटत्वव्यापकत्वात् रूपादिव्याप्यत्वाच्च सर्वशब्दात्[4] घटत्वादिव्यापके[5] रूपादिव्याप्यत्वलाभे तयोरपि व्याप्यव्यापकभावोऽर्थाल्लभ्यते। द्रव्यत्वादिव्यापकपर्याप्ते रूपाद्यव्याप्यत्वात् "सर्वाणि द्रव्याणि रूपवन्ति" इत्यादावयोग्यता।

उद्देश्यताऽवच्छेदकव्यापकत्वं च तत्समानाधिकरणान्योन्याभाव प्रतियोगिताऽनवच्छेदकत्वम्; तेन रूपादिव्याप्यपर्याप्तेर्द्रव्यनिष्ठात्यन्ताभाव प्रतियोगिताऽनवच्छेदकधर्मवत्त्वेऽपि न क्षतिः। घटत्वादिव्यापकयावत्त्वपर्याप्तिश्च न घटादिव्यक्तिभेदाद्भिद्यते। अतो न घटत्वादिव्यापकताया अनुपपत्तिः।

---

[1] ज. व्युत्पत्तिं मा विरौत्सीत् का.

[2] का 1. विधेयतावच्छेदकांशे ज.का 2.

[3] का. दुर्घट एव ज.

[4] ज. शब्दात् का.

[5] का 1. व्यापक का 2. व्यापकत्व ज.

विधेयव्याप्यत्वं च व्यभिचारित्वसंबन्धावच्छिन्नप्रतियोगिताक तत्तद्विधेयताऽवच्छेदकावच्छिन्नाभाववत्त्वम्[1]। अतो विधेयताऽवच्छेदकावच्छिन्नस्य यत्र केवलान्वयिता तत्र नाप्रसिद्धिः। व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकस्यैव तथाविधाभावस्य प्रसिद्धत्वात्।

अत्र च उद्देश्यताऽवच्छेदकविधेयतावऽच्छेदक घटत्वरूपत्वादीनामुपलक्षणतया अनुगमकं तादृशावच्छेदकत्वमेव, अतो न शक्त्यानन्त्यम्; न वाऽपूर्वधर्मव्यापकत्वादिभानानुपपत्तिः; न वा तादृशावच्छेदकत्वभानापत्तिः।

यद्यपि सामान्यत उद्देश्यताऽवच्छेदकत्वमव्यावर्तकमेव। उद्देश्यताऽवच्छेदकविधया[2] स्वसमभिव्याहृतपदप्रतिपाद्यत्वं च तादृशपदजन्य शाब्दबोधात् पूर्वं दुर्घटम्। तथाऽपि तादृशपदप्रतिपाद्यत्वेन वक्तृबुद्धेर्वक्तृतात्पर्यस्य वा विषयत्वं तथा वाच्यम्। तच्च प्रकरणादिना पूर्वमपि सुग्रहम्। स्वत्वाननुगमः पूर्ववत्समाधेयः।

उद्देश्यविधेयभावश्च न विशेष्यविशेषणभावनियतः। अतः "सर्वेषु घटेषु रूपम्" इत्यादावपि घटत्वादिरूपत्वाद्योरुद्देश्यविधेयताऽवच्छेदकभावोऽक्षत एवेति न घटत्वादिव्यापकरूपत्वाद्यवच्छिन्न-व्याप्यपर्याप्तिकयावत्त्वभानानुपपत्तिः।

**विधेयवाचकपदसमानाधिकरणसर्वपदार्थः**

इयं च व्युत्पत्तिरुद्देश्यवाचकपदसमानाधिकरणसर्वपदे। विधेयवाचकपद समानाधिकरणसर्वपदस्य च विधेयताऽवच्छेदकव्यापक-उद्देश्यताऽवच्छेदकावच्छिन्न सम्बन्धव्याप्यपर्याप्तिकं यावत्त्वमर्थः। अतः "काले सर्वे वृत्तिमन्तः", "कालः सर्वधर्मवान्"इत्यादौ सर्वपदेन वृत्तिमत्त्वादिव्यापककालादिसम्बन्धव्याप्यपर्याप्तिकं यावत्त्वं प्रतीयते।

[1] ज. तत्तद्विधेयताऽवच्छेदकावच्छिन्नप्रतियोगिताकतत्तद्विधेयाभाववत्त्वम् का.
[2] का. विधेयार्थक ज.

**साधारणव्युत्पत्तिः**

अथ वा स्वार्थान्वयिताऽवच्छेदकधर्मव्यापक-तादृश धर्मावच्छिन्नान्वयिताऽवच्छेदकावच्छिन्नव्याप्यपर्याप्तिक-धर्मावच्छिन्नं सर्वपदार्थ इत्युद्देश्यविधेयभावं विशिष्यानिवेश्य सर्वसाधारण्येका व्युत्पत्तिरेव स्वीक्रियते। अन्वयित्वं च विशेष्यविशेषण[1]साधारणम्।

"सर्वं प्रमेयम्" इत्यादौ वस्त्वादिपदाध्याहारमन्तरेण बोधोपगमे तदनुरोधेनान्योन्याभावप्रतियोगिताऽनवच्छेदकविधेयव्याप्यपर्याप्तिकयावत्त्वार्थकताऽपि सर्वपदस्य स्वीकार्या। "अयं सर्वं घटं वेत्ति" इत्यादावेतदीयज्ञानविषयतात्वादिना विषयत्वानन्वयात् तादृशधर्मो नान्वयिताऽवच्छेदकः। अन्वयिताऽवच्छेदक विषयतात्वावच्छिन्नव्याप्यत्वमतिप्रसञ्जकमिति तत्रापि व्युत्पत्त्यन्तरं स्वयमूहनीयम्।

"अत्र न सर्वाणि रूपाणि" इत्यादौ नञर्थप्रतियोगिनि[2] विशेषणार्थकसर्वशब्दस्य स्वार्थान्वयिताऽवच्छेदकरूपत्वादिव्यापकपर्याप्ति निरूपकयावत्त्वार्थकतया तदवच्छिन्नाभाव एव प्रतीयते। व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्तादृशाभावो घटादावबाधित एवेति नायोग्यता। न चाव्यासज्यवृत्तिगुणत्वादिपर्याप्तेरपि रूपत्वादिव्यापकतया गुणत्वादिसाधारणरूपत्वादिव्यापकपर्याप्तिकधर्मावच्छिन्नाभावो न घटादाविति कथमत्र योग्यतेति वाच्यम्। अव्यासज्यवृत्तिगुणत्वादेरेकैक मात्रवृत्तिधर्मावच्छिन्नपर्याप्तिकूटस्यैव "सर्वाणि रूपाणि गुणा" इति प्रतीत्याऽवगाहनात्सर्वसाधारणैकपर्याप्तौ मानाभावात्। प्रत्येकधर्मावच्छिन्नपर्याप्तिषु रूपत्वादेर्निरुक्तव्यापकत्वाभावात्।

"सर्वं द्रव्यं न रूपवत्" इत्यादौ द्रव्यत्वादिव्यापकयावत्त्वसामानाधिकरण्यमभावस्य प्रतीयते, अतो नायोग्यता।

---

[1] ज.का 2. भाव इत्यधिकं का 1.
[2] ज. प्रतियोगि का.

"अनुयोगिविशेषणावच्छेदेनैव नञाऽभावः प्रत्याय्यते। "द्रव्यं न रूपवत्" इत्यादिप्रयोगादर्शनादिति कथमेतदुपपाद्यताम्?" इति तु नाशङ्कनीयम्। अव्यासज्यवृत्तिधर्मावच्छिन्ना[1]नुयोगिकाभावबोधे तथा नियमोपगमात्।

**यत्तुमतम्**

यत्तु स्वरूपसंबन्धात्मकमभावानुयोगिताऽवच्छेदकत्वमनुयोगिविशेषणे नञ्पदजन्याभावप्रतीत्या गृह्यते, द्रव्यत्वादौ न तादृशरूपवद्भेदानुयोगिताऽवच्छेदकत्वम्, अतो "द्रव्यं न रूपवत्" इत्यादयो न प्रयोगाः। व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावाभ्युपगमेन च "सर्वं द्रव्यं न रूपवत्" इत्यादिप्रयोगा उपपादनीयाः। न च व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावाभ्युपगमे कस्यापि रूपादेः सर्वघटादिषु पर्याप्तिर्नास्तीति सर्वघटत्वाद्यवच्छिन्नेऽपि रूपादिमद्भेदसत्त्वेन "सर्वे घटा न रूपवन्त" इत्यादिप्रयोगापत्तिरिति वाच्यम्। रूपादिपर्याप्तित्वेनानुगत पर्याप्तीनामनतिप्रसक्तेन घटादिनिष्ठयावत्त्वादिनाऽप्यवच्छेदात्तदवच्छेदेन रूपादि मद्भेदवृत्तौ विरोधात्। द्रव्यत्वादिव्यापकयावत्त्वस्य चातिप्रसक्ततया रूपादिपर्याप्तित्वावच्छिन्नानाम्[2] अनवच्छेदकतया तदवच्छेदेन रूपादिमद्भेदवृत्तावविरोधादिति।

**तन्निरासः**

तदसत्। उक्तरीत्यैवोपपत्तौ प्रतियोगिताऽवच्छेदकादिमति तच्छून्यसाधारणव्यासज्यवृतिधर्मावच्छेदेन अन्योन्याभावादिवृत्तौ मानाभावात्। तादृशाभावोपगमे, प्रतिबन्धकसमवहितेऽपि देशे व्यासज्यवृत्ति धर्मावच्छिन्नानुयोगिताकप्रतिबन्धकाभावबलात् कार्यापत्तेः। तत्र कारणताऽवच्छेदककोटौ विशेषणान्तरं प्रक्षिप्यापत्तिवारणे तु गौरवात्।

अथ "सर्वं द्रव्यं न रूपवत्" इत्यादौ द्रव्यत्वादिव्यापकपर्याप्तौ विधेयीभूतरूपवद्भेदव्याप्यत्वस्य बाधितत्वादयोग्यत्वं दुर्वारमेवेति चेत् ? न। तत्र

---

[1] ज.कंसे मं. व्यासज्यवृत्तिधर्मावच्छिन्ना क.मं



[2] अपि अ.का2.

विधेयव्याप्यत्वभानानुपगमात्, खण्डशो विभिन्नशक्त्युपगमेन क्वचित्तदंशपरित्यागेन बोधे विरोधविरहात्।

**अनेकत्वमपि सर्वपदार्थः**

"सर्वं गगनम्" इत्यादिप्रयोगाभावात् यावत्त्ववदनेकत्वमपि सर्वपदार्थः। तच्च स्वार्थाभेदान्वयोद्देश्यताऽवच्छेदकसमानाधिकरणभेदप्रतियोगित्वमेव। भेदश्च सामानाधिकरण्य-निरूपकत्वोभय-संबन्धेन प्रतियोगिताविशिष्टान्यो ग्राह्यः। अतो न द्वित्वावच्छिन्नभेदमादायातिप्रसङ्गः। एतादृशोभयधर्मावच्छिन्ने शक्तिरेकैव। अतो नैकं धर्मं परित्यज्यापरमादाय बोधः कदाचिदपीति न कतिपयानेकतात्पर्येणाशेषैकतात्पर्येण वा सर्वशब्दः प्रयुज्यते।

**पूर्वप्रकान्ततावद्धर्मावच्छिन्ने सर्वपदशक्तिः**

"चैत्रो दधि भुङ्क्ते, मैत्रः पयो भुङ्क्ते, देवदत्तो घृतं भुङ्क्ते, विष्णुमित्रः सर्वमेव" इत्यादौ सर्वपदेन प्रत्येकं दधिपयोघृतानां भोजनकर्मतया प्रतिपादनात् यद्रूपावच्छिन्ने पदान्तरोपस्थाप्यार्थे स्वार्थान्वयस्तद्रूपावच्छिन्नान्विततया यावद्धर्मावच्छिन्ना उपक्रान्ताः, प्रत्येकं तावद्धर्मावच्छिन्नेषु सर्वपदस्य शक्त्यन्तरमङ्गीकार्यम्। उपक्रान्तैकधर्मावच्छिन्नान्वययोग्यताविरहे वाक्यस्याप्रामाण्यात्। तादृशस्थले तथाविधसकलधर्माणामेवान्वयिताऽवच्छेदकतया भाननियमः। तन्निर्वाहिका च "तथाविधयावद्धर्मप्रकारक[1]बोधं जनयतु सर्वपदम्" इत्याकारकसङ्केतरूपा विलक्षणशक्तिरेव। तादृशशक्तिज्ञानेन एकधर्मप्रकारकबोधजननेऽपरापरतथाविधधर्मप्रकारकबोधसामग्र्याः पुष्पवन्तपदशक्तिज्ञानेन चन्द्रत्व सूर्यत्वयोरेकतरप्रकारकबोधजननेऽपरप्रकारकबोधसामग्र्या इव प्रयोजकत्वोपगमात्।

न च प्रक्रान्तानां दध्यादीनां प्रत्येकमन्वये वाक्यभेदापत्त्या साहित्यप्रकारेण तावत्पदार्थवाचकत्वमेव सर्वपदस्य किं नोपेयत इति वाच्यम्। साहित्यविशिष्टान्वयस्य समभिव्याहृतपदार्थे यत्र बाधस्तत्रापि तथा प्रयोगात्। वाक्यभेदस्य च गत्यन्तरविरहेणेष्टत्वात्। अत एव प्रत्येकं



[1] ज. प्रकारकं का.

पुत्रपश्वादिरूपफलकामकर्तव्यतया [1]क्रतूनभिधायाभिहितेन "सर्वेभ्यो दर्शपूर्णमासौ" इत्यनेन मिलितानां तावत्फलानां दर्शपौर्णमासकर्तव्यताप्रयोजककामनाविषयत्वं न प्रतिपाद्यते; प्रक्रान्तवाचिना सर्वनामपदेन मिलितत्वेन फलानुपस्थापनात्; अपि तु प्रत्येकमेवेति, प्रत्येकफलकामस्यैव तत्राधिकार इति योगसिद्ध्यधिकरणसिद्धान्तो[2]ऽपि सङ्गच्छते।

## किंपदशक्तिविचारः

किम्पदस्य जिज्ञासिते शक्तिः, अत एव स्वीयजिज्ञासाज्ञापनाय किम्पदघटितप्रश्नवाक्यं प्रयुज्यते।

### उद्धेश्यवाचककिम्पदशक्तिः

तत्रोद्देश्यवाचककिंपदस्य स्वसमभिव्याहृतपदोपस्थाप्यताऽवच्छेदकधर्मावच्छिन्नविधेयतानिरूपितो-द्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितो धर्मः प्रवृत्तिनिमित्तम्। उपस्थाप्यतावच्छेदकत्वान्तमुपलक्षणतयाऽनुगमकम्; शाब्दबोधे तदभानात्। एवं च "कः पचति" इत्यादितः पाककृतित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितो यो धर्मस्तद्वान् पचति इत्याकारकोऽन्वयबोधः[3] । "किञ्चिद्धर्मावच्छिन्नोद्देश्यकपाककर्तृत्वविधेयकं[4] ज्ञानं भवतु" इत्याकारकजिज्ञासायास्तादृशबोधविषयकतया तादृशेच्छाविषयीभूतज्ञानजनकात् "ब्राह्मणः पचति"इत्युत्तरवाक्यान्निवृत्तिरिति तादृशप्रश्नानन्तरं तथैवोत्तरं प्रयुज्यते।

न चैवं "प्रमेयः पचति"इत्याद्युत्तरवाक्यमेव कथं न तादृशप्रश्नानन्तरं प्रयुज्यते? तज्जन्यज्ञानस्यापि तादृशेच्छाविषयत्वादिति वाच्यम्;

---

[1] यज्ञ अ.का2.

[2] का. सिद्धान्तः ज.

[3] प्रतिपाद्यते इत्यधिकं ज.



[4] का. पाककृतित्वावच्छिन्नविधेयताशालि ज.

जिज्ञासाविषय[1]स्वसमभिव्याहृतपदोपस्थाप्यविधेयन्यूनवृत्तिधर्मावच्छिन्ने एव तादृशकिंपदस्य शक्त्यभ्युपगमात्।

अभेदेन स्वार्थान्वितोद्देश्यवाचकपदान्तरसमभिव्याहृतकिंपदशक्यतावच्छेदकगर्भे च स्वार्थाभेदान्वयितावच्छेदकत्वोपलक्षितधर्मन्यूनवृत्तित्वमपि धर्मांशे विशेषणं देयम्, अतः "को ब्राह्मणः पचति" इत्यादिप्रश्नानन्तरं "चैत्रः पचति"इत्याद्याकारकोत्तरवाक्यं प्रयुज्यते; न तु "मनुष्यः पचति"इत्यादिकम्, मनुष्यत्वादेर्ब्राह्मणत्वाद्यन्यूनवृत्तित्वात्तदवच्छिन्नोद्देश्यकत्वेन ज्ञानगोचरेच्छायास्तत्राप्रतीतेः।

एवं यत्रोद्देश्यताऽवच्छेदके किंपदार्थस्याभेदेनान्वयस्तत्र तदन्वयितावच्छेदकधर्मावच्छिन्ने विशेषणताऽऽपन्नतदन्वयितावच्छेक धर्मन्यूनवृत्तिधर्मावच्छिन्नोद्देश्यतावच्छेदकताकप्रकृतविधेयज्ञानगोचरेच्छा किंपदेन बोध्यते। [2]एवं च प्रकृते[3] सत्तानिष्ठविधेयतानिरूपितघटवृत्त्युद्देश्यतावच्छेदकता निरूपितसंख्यात्वन्यूनवृत्तिधर्म-निष्ठावच्छेदकत्वेन जिज्ञासितो यो धर्मस्तद्वान् किंपदार्थः। अतः "कति घटाः सन्ति" इत्यादौ डतिप्रत्ययार्थे संख्यादौ किंपदार्थस्य जिज्ञासितधर्मावच्छिन्नस्याभेदेनान्वयात् संख्यात्वन्यूनवृत्ति दशत्वत्वावच्छिन्नोद्देश्यतावच्छेदकताकबोधजनकं "दशसंख्याका घटाः सन्ति" इत्युत्तरं प्रयुज्यते।

यत्र चोद्देश्यतावच्छेकीभूतविभक्त्याद्यर्थे भेदेन किंपदार्थान्वयः "कस्य पुत्रः सुन्दरः" इत्यादौ; तत्र यादृशसम्बन्धेन यदवच्छिन्ने तदन्वयः, तत्र तादृशसम्बन्धेन विशेषधर्मावच्छिन्नविशेषिततदवच्छिन्न-निष्ठोद्देश्यतावच्छेदकताक प्रकृतविधेयज्ञानगोचरेच्छा प्रतीयते।

---

[1] ज. विषयीभूत का 2. ना.का1.

[2] इदं वाक्यं नास्ति का 2.

[3] ज. प्रकृत का 1.

**विधेयवाचककिम्पदशक्तिः**

एवं विधेयवाचककिंपदस्य स्वसमभिव्याहृत पदोपस्थाप्यतावच्छेदकत्वो पलक्षितधर्मावच्छिन्नोद्देश्यता-निरूपितविधेयतावच्छेदकतया जिज्ञासितो यो विशेषधर्मस्तदवच्छिन्ने शक्तिरिति; "अयं कः?" इत्यादौ "इदन्त्वाद्यवच्छिन्नांशे विधेयतावच्छेदकत्वेन जिज्ञासितधर्मवान्" इत्याकारको बोधः। तेन तद्विषयकजिज्ञासाविषयीभूतज्ञानजनकं च "अयं ब्राह्मणः" इत्याद्युत्तरवाक्यं तादृशप्रश्नानन्तरं प्रयुज्यते।

एवं यत्र विधेये विधेयताऽवच्छेदके वा किंपदार्थस्याभेदेन भेदेन वाऽन्वयः "इदं किं द्रव्यम्?" "इदं कस्य धनं?" "भवतः पुत्राः कति?" "भवान्कस्य पुत्रः?" इत्यादौ, तत्र रीतिः पूर्ववदूहनीया।

**अव्ययकिम्पदशक्तिः**

"किमिन्दुः किं पद्मम्" इत्यादौ च अव्ययकिमो वाशब्दस्येव वितर्कोऽर्थः। वितर्कश्च प्रयोक्तुः संभावनात्मकं ज्ञानम्। तदर्थस्य च विशेष्यतासम्बन्धेन प्रथमान्तपदोपस्थाप्ये विशेष्ये; प्रकारितासम्बन्धेन च तत्र विशेषणस्य चन्द्रादेरन्वयः, नामार्थेनाव्ययार्थस्य भेदान्वयेऽविरोधात्।

यत्र विशेषणवाचकपदमपि प्रथमान्तं, तत्राभेदसम्बन्धावच्छिन्नप्रकारिता संसर्गः, यत्र तु[1] प्रकृत्यर्थस्य[2] विशेष्यतया स्वार्थबोधकं[3] विभक्त्यन्तं पदम्[4]; तत्र किंपदासत्त्वे तादृशविभक्त्यन्तसमुदायार्थस्य विशेष्ये यादृशसम्बन्धेनान्वयः, तादृशसंसर्गावच्छिन्नप्रकारितैव तादृशार्थस्य किंपदार्थे संसर्गः। अतः "किमिन्दुः" इत्यादावभेदेन चन्द्रादिप्रकारिका; "धनमिदं किं चैत्रस्य" इत्यादावाश्रयतासम्बन्धेन चैत्रस्वत्वादिप्रकारिका सम्भावना नियमतः प्रतीयते। "किमिन्दुः" इत्यादौ सम्भावनाबोधोत्तरं तत्प्रयोजकाह्लादकत्वादि साधर्म्यप्रतीतिस्त्वर्थादिति।

---

[1] ज. च का.

[2] ज. प्रकृत्यर्थ का.

[3] ज. बोधक का.



[4] का1. विभक्त्यन्तं विशेषणपदं का 2. विभक्त्यन्तं ज.

[1]कुत्साऽर्थकमपि क्वचित् किंपदं, यथा किंगौरित्यादौ।

## यत्पदशक्तिविचारः

तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने यत्पदस्य शक्तिः। अत एव यत्पदेनार्थप्रत्यायने नियमतस्तत्पदापेक्षा। तत्पदसमभिव्याहारज्ञानं विनोक्तानुगमगधर्माग्रहेण शक्तिपरिच्छेदस्या[2]सम्भवात्। तच्छब्दजन्यप्रतिपत्तिपूर्वमपि तत्प्रतिपाद्यतया वक्तुरभिरन्धिः प्रकरणादिना सुग्रह इति न तच्छब्दजन्यप्रतिपत्तेर्यत्पदशक्तिग्रहेऽपेक्षा।

इयं च व्युत्पत्तिः प्रक्रम्यमाणपरामर्शकयच्छब्दस्य। "चैत्रः समागतो यस्तत्रावलोकितः" इत्यादौ चैत्रादिपदेनाप्युपस्थापितस्य यच्छब्देन बोधनात्।

अत एव –

"साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताऽधिके"

इत्यादौ तत्पदासत्त्वेऽपि न दोषः। पूर्वप्रक्रान्तस्यैव[3] कृतशब्दोप[4]स्थापितव्यापारस्याभेदेन मीलनान्वयितया यच्छब्देन बोधनात्।

एवं "यं सर्वशैलाः"[5] इत्यादावपि। तदनुरोधेन पूर्वप्रयुक्तपदोपस्थापितेऽपि तस्य शक्त्यन्तरं स्वीकरणीयम्। अतिप्रसङ्गश्च स्वप्रयोजकबुद्धिस्थत्वमन्तर्भाव्य वारणीयः।

## तत्पदशक्तिविचारः

एवं यत्पदोपस्थाप्ये तत्पदशक्तिर्बोध्या। अत एव प्रक्रम्यमाणपरामर्शकतच्छब्देनापि नियमतो यत्पदमपेक्ष्यते, "तमानय य इहास्ति" इत्यादाविव "तमानय घट इहास्ति" इत्यादितो घटानयनादिप्रतीते रनुभवविरुद्धत्वात्। प्रक्रान्तपरामर्शकस्य च न तदपेक्षानियमः। "तदन्वये

---

[1] इदं वाक्यं का2 पुस्तके यत्र विशेषणवाचकेत्यादिपूर्ववाक्यसमूहात्प्रागेव दृश्यते।

[2] ज. च्छेदस्यैव का.

[3] एव ना.का2.

[4] का. कृतमिति-प्रकृतशब्दोप ज. स्थापित का2.



[5] कुमारसंभवः 1.2.

शुद्धिमति"[1] इत्यादौ वैवस्वतादिपदोपस्थाप्यस्यापि तच्छब्देन परामर्शात्। तदनुरोधेन च तच्छब्दस्यापि पूर्ववत् पूर्वप्रयुक्तपदोपस्थापिते शक्त्यन्तरमङ्गीकार्यम्। उपस्थितिश्च स्वविशेष्यकवृत्ति[2]ज्ञानाधीना ग्राह्या। अतः "पशुरस्ति तं पश्य" इत्यादौ पश्वादिपदोपस्थापितलोमादीनां तदादिशब्देन न परामर्शः।

प्रसिद्धार्थकमपि तत्पदम्। यथा "कला च सा कान्तिमती"[3] इत्यादौ।।

## इदमेतत्पदयोः शक्तिविचारः

[4]इदमेतदोः प्रत्यक्षबुद्धिविषये ,[5]

## अदःपदशक्तिविचारः

अदसः[6] परोक्षबुद्धिविषये शक्तिः।

## स्वपदशक्तिविचारः

[7]स्वशब्दस्य स्वसमभिव्याहृतपदोपस्थाप्ये शक्तिः। समभिव्याहारश्चात्रैकवाक्यघटकत्वम्।

**अत्राक्षेपः**

अथैवं "चैत्रः स्वपुत्रं पश्यति" इत्यादाविव "स्वं चैत्रपुत्रः पश्यति" "चैत्रभ्राता स्वपुत्रं पश्यति" इत्यादौ कथं न स्वशब्देन चैत्रः प्रत्याय्यते?

---

[1] तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः। दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव।। रघुवंशः 1.

[2] ज.का 2. शक्ति का 1.

[3] द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावतः त्वमस्य लोकस्य च नेत्रकौमुदी।। इति कुमारसंभवः 5.

[4] "इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपम्।
अदसस्तु विप्रकृष्टं तदिति परोक्षे च विजानीयात्।। इति शाब्दिकानां संप्रदायः" लघुमञ्जूषा पृ.1163. (दिनकरीये उदाहृतं च)।

[5] ज.का 2. शक्तिरित्यधिकं का 1.

[6] ज. अदसश्च का 2. 

[7] द्र0 लघुमञ्जूषा पृ.1168.

मुख्यविशेष्यवाचकताव्युत्पत्त्यभ्युपगमे "स्वपुत्रदर्शिनं चैत्रं मैत्रः पश्यति" इत्यादौ चैत्रपुत्रबोधानुपपत्तिः।

न च तत्रावान्तरवाक्यार्थबोधे चैत्रस्य मुख्यविशेष्यतया नेयमनुपपत्तिरिति वाच्यम्। अवान्तरवाक्यार्थ-धियमन्तरेणाहत्यैव "विशेष्ये विशेषणम्" इत्यादिरीत्या महावाक्यार्थबोधे यत्र तात्पर्य्यं, तत्र तदनुपपत्तेर्दुर्वारत्वात्।

न च स्वार्थस्य साक्षात्परम्परया वा यदर्थे विशेषणत्वं तादृशार्थवाचकताव्युत्पत्तेर्नायं दोष इति वाच्यम्। एवमपि "स्वपुत्रश्चैत्रेण दृश्यते" इत्यादौ चैत्रपुत्रबोधानुपपत्तेः।

समभिव्याहृतक्रियाऽन्वयिवाचकत्वमपि न विचारं सहते; परम्परया क्रियाऽन्वयित्वस्य "चैत्रभ्राता स्वं पश्यति"इत्यादौ चैत्रादिसाधारणत्वात्। साक्षात्क्रियाऽन्वयित्वस्य "चैत्रः स्वं पश्यति" इत्यादावप्यभावात्। तत्र विभक्त्यर्थद्वारैव नामार्थधात्वर्थयोर्भेदान्वयस्य व्युत्पन्नत्वात्।

क्रियाऽन्वयिप्रत्ययार्थे साक्षादन्वयित्वविवक्षणान्न दोष इति चेत्, एवमपि "स्वव्यापकवह्निसमानाधिकरणधूमवान्पर्वत" इत्यादौ स्वशब्देन धूमादिपरामर्शानुपपत्तेर्वारणमशक्यमेव। एवं "चैत्रेणावलोकितं स्वपुत्रं मैत्रः पश्यति" इत्यादौ चैत्रपुत्रबोधापत्तिवारणमपि।

न च स्वपदार्थो यदर्थघटितविशेषणस्य विशेष्यतावच्छेदककोटौ, यदर्थस्य विशेषणकोटौ वा निविशते स एव पदार्थः स्वशब्दवाच्यः।"चैत्रपुत्रः स्वं पश्यति" इत्यादौ "चैत्रस्य भ्राता स्वपुत्रं पश्यति" इत्यादौ च[1] स्वपदार्थश्चैत्रस्य विशेषणकोटौ चैत्रघटितार्थस्य धर्मितावच्छेदककोटौ वा न निविशत इति नातिप्रसङ्गः। "चैत्रावलोकितं स्वपुत्रं मैत्रः पश्यति" इत्यादौ चैत्रपदस्य चैत्रकर्तृके लक्षणया[2] चैत्रः पदार्थैकदेशो, न तु पदार्थ इति स्वशब्दान्न तत्प्रतीतिः। "चैत्रेणावलोकितम्" इत्यादौ तु तात्पर्यसत्त्व इष्यत एव ततस्तत्प्रतीतिः। "स्वपुत्रदर्शिचैत्रधनम्" इत्यादौ चैत्रपुत्रदर्शिचैत्रसम्बन्धित्वावच्छिन्ने चैत्रान्तस्य; वाक्ये लक्षणाविरहे तु पूर्वभागं

---

[1] 'चैत्रेण स्वपुत्रो दृश्यते' 'चैत्रपुत्रः स्वं पश्यति' इत्यादौ, 'चैत्रस्य भ्राता स्वपुत्रं पश्यति' इत्यादौ च **ज.** यथा 'चैत्रेण स्वपुत्रो दृश्यते' 'चैत्रः स्वपुत्रं पश्यति' इत्यादौ **अ. का 1.**'चैत्रपुत्रः स्वं पश्यति' इत्यादौ, 'चैत्रस्य भ्राता स्वपुत्रं पश्यति' इत्यादौ च **का 2.**



[2] का. चैत्रसंबन्धिलक्षणया ज.

परित्यज्य तादृशलक्ष्यार्थपरस्य केवलचैत्रादिपदस्यैव वा तत्र लक्षणा, तत एव चैत्रपुत्रादिप्रतीत्युपपत्तिरिति वाच्यम्।

एवं सति "चैत्रस्य भ्रात्रा स्वपुत्रो दृश्यते" इत्यादौ स्वपदेन चैत्रप्रतीत्यापत्तेर्दुर्वारत्वात्।

**स्वमतेन समाधानम्**

मैवम्। साक्षात्परम्परया वा यः स्वार्थस्य विशेष्यो, यश्च समभिव्याहृतक्रियाकारकपदार्थः, तदुभयत्र स्वपदस्य शक्तिः। "स्वव्यापकवह्निसामानाधिकरण्यं धूमे" इत्यादौ "अस्ति" इति क्रियाऽध्याहारात् स्वपदस्य समभिव्याहृतक्रियाकारकपरत्व[1]मक्षतमेवेति न स्वपदात्तत्प्रतीत्यनुपपत्तिः।

एवं —

"कलशे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः"

इत्यादावपि "अस्ति" इति क्रियाऽध्याहारात् स्वपर्यायनिज शब्दात्कलशादिप्रतीतिः।

"स्वव्यापकवह्निसामानाधिकरण्यं धूमस्य" इत्यादयश्च न प्रयोगाः।

**अत्राक्षेपः**

इदं तु चिन्त्यते। यद्रूपेण समभिव्याहृतपदादुपस्थितिः, तद्रूपावच्छिन्नस्य स्वपदार्थत्वे, एकेन ब्राह्मणेन ब्राह्मणान्तरपुत्रदर्शनदशायां "ब्राह्मणः स्वपुत्रं न पश्यति" इति प्रयोगानुपपत्तिः। अन्वयिताऽवच्छेदकावच्छिन्नप्रतियोगिताकाभावस्य विशेष्ये बाधात्। समभिव्याहृतपदार्थनिष्ठतत्तद्व्यक्तित्वविच्छिन्नस्य तत्तदर्थत्वेऽपि वह्निकालीनद्रव्यवति ह्रदादौ "स्वव्यापकवह्निकालीनद्रव्यं नास्ति" इति प्रयोगानुपपत्तिः। तत्र द्रव्यपदस्यापि लक्षणया तत्तद्व्यक्तित्वावच्छिन्नपरत्वे महानसादावपि तथा प्रयोगापत्तिः। तथाविधयत्किञ्चिद्व्यक्त्यभावस्य तत्राबाधात्।

तादृशसमभिव्याहृतस्थले यद्यद्व्यक्तिव्यापकता वह्नेस्तत्तद्व्यक्तित्वावच्छिन्नाभावकूट एव तत्र नियमतः प्रतीयत इति चेत् – न।

तथाविधसकलव्यक्तिनिष्ठतत्तद्व्यक्तित्वानां युगसहस्रेणापि ज्ञातुमशक्यत्वात्।



[1] ज. धूमस्य समभिव्याहृतक्रियाकारकत्व का 2. स्वपदस्य समभिव्याहृतक्रियाकारकत्व का 2.

कदाचित्कस्य-चिज्ज्ञानसंभवेऽपि कतिपयतत्तद्व्यक्तित्वावच्छिन्नमात्रोपस्थितिदशायां कतिपयाभावमात्रगोचरप्रतीतेरप्यङ्गीकार्य्यतया तादृशनियमस्य दूरपराहतत्वादिति।

**केषांचित्समाधानम्**

अत्र केचित्— "ब्राह्मणः स्वपुत्रं पश्यति" इत्यादौ स्वपदं ब्राह्मणत्वावच्छिन्नार्थकमेव। विशेष्यीभूतब्राह्मणत्वाद्यवच्छिन्ने च स्वपदार्थघटितस्य ब्राह्मणपुत्रदर्शनकर्तृत्वादिरूपविशेषणस्य न केवलमाश्रयत्वादिसम्बन्धेनान्वयः, अपि तु स्वाश्रयत्व-स्वनिरूपकदर्शनविषयपुत्रजनकत्वोभयसम्बन्धेनैव। एवं च तत्र[1] नञा तादृशोभयसम्बन्धावच्छिन्नतदभाव एव प्रत्याय्यते। अतो नोक्तदोषावसर इत्याहुः[2] ।

## एकशब्दशक्तिविचारः

एकशब्दस्य कैवल्यादिविशिष्टे शक्तिः। कैवल्यं च सजातीयद्वितीयरहितत्वम्। तच्च सजातीयनिष्ठभेदाप्रतियोगित्वम्। सजातीयत्वं चोद्देश्यविशेषणवाचकैकशब्दात् कैवल्यघटकत्वेन प्रकृतविधेयवत्त्वरूपं प्रतीयते। तथा च "अत्रायमेको भुङ्क्ते" इत्यादौ "एतद्देशाधिकरणकभोजनकर्तृनिष्ठभेदाप्रतियोगी अयमत्र भुङ्क्ते" इत्याद्याकारको बोधः। शक्यताऽवच्छेदकानुगम उक्तदिशा चिन्तनीयः।

"अयं फलमेकं भुङ्क्ते" "फलमेकं भुञ्जानस्तिष्ठति" इत्यादौ विधेयतावच्छेदककोटिनिविष्टार्थैकपदाच्च यादृशार्थविशेषणताऽऽपन्ने यदवच्छिन्ने स्वार्थान्वयिनो विशेषणत्वं तादृशार्थानुयोगिकान्वयप्रतियोगित्वविशिष्ट तद्रूपावच्छिन्नानुयोगिताकान्वयप्रतियोगिनिष्ठभेदाप्रतियोगित्वरूपकैवल्यं प्रतीयते। अतस्तत्र एतत्कर्तृकभोजनादिनिष्ठसंसर्गप्रतियोगिकर्मत्वादिनिष्ठसंसर्ग प्रतियोगिनिष्ठभेदाप्रतियोगित्वं फलादौ प्रतीयते।

एकसमानार्थकमात्रादिस्थलेऽप्येतादृशी प्रतीतिरिति कृतं पल्लवितेन।।

**इति शक्तिवादे विशेषकाण्डः।**

---

[1] का 2. तत्र तत्र ज. का 1.



[2] ज. वदन्ति का.

# अथ परिशिष्टकाण्डः

## आकृतौ शक्तिविचारः

गवादिशब्दात्संस्थानविशेषरूपाकृतेरपि बोधस्यानुभविकतया गोत्वादिजातिवत् साऽपि गवादिपदवाच्ये विशेषणम्। तस्याश्च वाच्यविशेषणत्वेऽपि न प्रवृत्तिनिमित्तता। साक्षात्सम्बन्धेन वाच्यवृत्तित्वाभावात्। अवयवसंयोगादिरूपायास्तस्याः सामानाधिकरण्यसम्बन्धेनैव गवादौ सत्त्वात्। तत्र शक्त्या जात्याकृत्योरेकतरविनिर्मोकेणापरभानविरहाल्लाघवाच्चोभयविशिष्टे गवादिपदस्यैकैव शक्तिः स्वीक्रियते। शक्यविशेषणभेदेऽपि पुष्पवन्तपदवद्धेन्वादिपदवच्च शक्त्यैक्यस्य दुरपवदत्वात्।

यत्तु- एकविशिष्टापरावच्छिन्ने शक्तिरिति[1]; तदसत्। विशेषणविशेष्यभावे विनिगमनाविरहात्, गवाद्यंशे साक्षादुभयप्रकारकबोधस्यानुभवसिद्धस्य दुरपवदत्वाच्च। यत्र केवलाकृतिविशिष्टे गवादिपदस्य तात्पर्यं, यथा "पिष्टकमय्यो[2] गाव" इत्यादौ, तत्र शुद्धगोत्वाद्यवच्छिन्नपरधेन्वादिपद इव लक्षणैव। जात्याकृतिविशिष्टायां व्यक्तौ शक्तेरैक्यं "जात्याकृतिव्यक्तयस्तु पदार्थ" इति न्यायसूत्रे बहुवचनमुपेक्ष्य पदार्थ इत्येकवचनं निर्दिष्टवतो महर्षेरप्यनुमतम्।

## जातावेव शक्तिरिति मीमांसकमतम्

मीमांसकास्तु– गवादिपदानां जातिरेव वाच्या; न तु व्यक्तिराकृतिर्वा। व्यक्तिशक्तिमतेऽपि स्वरूपतस्तस्या ग्रहासम्भवेन शक्तिज्ञानप्रकारीभूतायां जातौ शक्तेः, तदवच्छेदकतायाः वा अवश्यकल्पनीयतया व्यक्त्यादौ तत्कल्पनायां गौरवात्प्रयोजनविरहाच्च। व्यक्तिशक्तिमते जातेरुपलक्षणत्वासम्भवः प्रागेव दर्शितः। यथा व्यक्तिशक्तिमते गोत्वांशे शक्तिस्तदवच्छेदकता वा तद्विशेषणानवच्छिन्नैव, तथा जातिशक्तिवादिमतेऽपि सा तथैवेति न गोत्वत्वादिप्रवेशात् गौरवशङ्काऽपि। न हि

---

[1] ज.का 1. एकविशिष्टापरावच्छिन्ने शक्तिरिति तु न सत् का 2.



[2] का. पिष्टमयो ज.मं.

जातिशक्तिमतेऽपि शाब्दबोधे सा यत्किञ्चिद्धर्म[1]प्रकारेण भासते; येन प्रकारभानार्थं प्रकारविशेषमन्तर्भाव्य शक्तिः कल्पनीया। अपि तु स्वरूपत एव।

**न्यायमतेन शङ्का**

अथानुमानादिना गोत्वादौ शक्तिग्रहो भवन् धर्मिताऽवच्छेदकतया गोत्वत्वादिकमवश्यं विषयीकरोति। निर्धर्मिताऽवच्छेदकज्ञानस्या[2]नुमानादिना जननासम्भवात्, तादृशज्ञानस्य विपरीतज्ञानाविरोधितयाऽनुपयुक्तत्वाच्च। एवं च तादृशधर्मस्य शक्यताऽवच्छेदकत्वं दुर्वारमेव। शक्तिग्राहकमानेन धर्मिताऽवच्छेदकांशे तदवच्छेदकताग्रहे बाधकाभावात्। यदि चावच्छेदकताग्रहेऽपि शक्तिधियस्तदंशे भ्रमत्वं कल्प्यते; विषयबाधेनावच्छेदकत्वमेव शक्तिग्राहकमानेन न गृह्यत इत्येव वा स्वीक्रियते, तदा प्रतियोगित्वकारणत्वादीनामपि तुल्ययुक्त्याऽवच्छेदकत्वविलयप्रसङ्गः, तत्राप्येवं सुवचत्वात्।

प्रतियोगित्वादिबुद्धेरवच्छेदकत्वावगाहित्वमनुभवसिद्धं यदि; तदा शक्तिधियस्तदवगाहिता न तथेति वचसि को वा श्रद्धधाति? विशेषाभावात्। मा भूद्वा गोत्वत्वादिकमवच्छेदकं शक्तेः[3], तथाऽपि शक्तिज्ञानकारणतायां गुरुशरीरगोत्वत्वादेर्धर्मिताऽवच्छेदकताऽऽत्मकविषयतानिवेशात् गौरवं दुर्वारमेव। व्यक्तिशक्तिवादिना[4] स्वरूपतो गोत्वादिनिष्ठधर्मिताऽवच्छेदकत्वस्यैव निवेशादिति चेत्?

**तत्समाधानम्**

न। [5]पदविशेषणताऽऽपन्न[6]शक्तौ निरूपितत्व[7]सम्बन्धेन; शक्तिसम्बन्धेन पदे वा स्वरूपतो गोत्वादिप्रकारिकाया एव शक्तिधियः स्वीकारात्। न हि

---

[1] ज. किंचिद्धर्म का.

[2] ज.का 1. धर्मितावच्छेदकज्ञानस्य का 2. स्पष्टं गलितम्।

[3] शक्यतायाः मं.

[4] ज.का 1. वादिनान्तु का 2.

[5] स्वरूपतः अ. मं.

[6] का. पन्ने ज. स्पष्टं गलितम्।

[7] निरूपकत्व मं.

"समवायेनैव जातेः स्वरूपतः प्रकारता" इति नियमः प्रामाणिकः। "घटं जानामि" इत्यादौ प्रकारितासम्बन्धेन स्वरूपतो घटत्वादीनां ज्ञानाद्यंशे प्रकारतोपगमात्। "समवायेन धर्मिविशेषणताऽऽपन्नस्यैव सम्बन्धान्तरेणान्यत्र स्वरूपतो भानम्" इत्यपि न नियमः। प्रामाण्यस्य परतो ग्राह्यतामते "अयं घट" इत्याकारकस्य स्वरूपतो घटत्वादिज्ञानस्यानुव्यवसाये प्रकारितायां, तत्सम्बन्धेन ज्ञाने वा समवायेन धर्मिविशेषणताऽनापन्नस्यैव घटत्वादेर्भानात्। अस्तु वा प्रकृतेऽपि गवादिविशेषणताऽऽपन्नस्यैव गोत्वादेः शक्तौ निरूपितत्व[1]सम्बन्धेन, शक्तिसम्बन्धेन पदे वा स्वरूपतः प्रकारता; गवादेश्च शक्तौ पदे वा स्वसमवेतनिरूपितत्व-स्वसमवेतवाचकत्वरूपपरम्परासम्बन्धेन[2] प्रकारता। तादृशी च गवादिविषयता न शाब्दबोधजनकताऽवच्छेदिकेति परम्परासम्बन्धेन प्रकारताया जनकताऽवच्छेदकत्वापेक्षया साक्षात्सम्बन्धावच्छिन्नप्रकारतायास्तथात्वे लाघवेन व्यक्तिशक्तिसिद्धेर्नावकाशः।

**न्यायमतेन पुनः पूर्वपक्षः**

अथ जातिशक्तिमतेऽपि शाब्दबोधे व्यक्तिभानमावश्यकम्। "गौर्नष्टा" "गौर्जाता" "गामानय" इत्यादौ समभिव्याहृतपदार्थान्वयस्य जातौ बाधात्। परम्परासम्बन्धेन तदन्वयोपगमेऽप्यन्वयिताऽवच्छेदकतया गोत्वत्वादिभानस्वीकारापत्तेः, शक्तौ गोत्वत्वाद्यन्तर्भावापत्तेश्च। न हि स्वरूपेण पदार्थस्य पदार्थान्तरान्वयितया भानं कश्चित् स्वीकुरुते[3]। स्वीकुरुते[4] वा प्रकारतया स्वरूपेणोपस्थितजातेर्भानम्। विशेष्यतया तद्भानं तु न सम्भवत्येव। निर्धर्मिताऽवच्छेदककशाब्दबोधस्य प्रवृत्त्याद्यनुपयोगितया तत्स्वीकारासम्भवात्। एवं च जातिमात्रवाचकत्वेनाभ्युपगतपदस्यापि व्यक्तिबोधजनकतायामप्य[5]विवादात्

---

[1] निरूपकत्व मं.

[2] का. परम्परासम्बन्धेन ज. मं.

[3] ज. कैश्चित् स्वीक्रियते का.

[4] ज. स्वीकुरु का.मं. हरिनाथीये तु स्वीकुरु इत्येव पाठः स्वीकृतः। स्वीकुरुते इत्येव संदर्भानुगुण इति भाति।



[5] अपि ना.मं.

व्यक्तिशक्तिर्ध्रुवैव। शक्तिभ्रमा[1]जन्यलक्षणाग्रहाजन्यतद्बोधजनकताया एव तच्छक्तिसाधकत्वात्, अन्यथा जातावपि शक्त्यसिद्धिप्रसङ्गात्। एवं शक्तेरीश्वरसङ्केतरूपत्वे व्यक्तिबोधकतायाः पदेऽबाधितत्वेनेश्वरेच्छाविषयतया तस्या अपि शक्यत्वं दुरपन्हवम्। न हि मीमांसकैर्भगवान्नानुमन्यत इत्येतावतैव तादृशयुक्तेरनवकाशः। तत्साधकबहुतरयुक्तिसत्त्वेन[2] तदुपन्यासेऽपि[3] निरुत्तरत्वापातात्।

एवं ज्ञाने पदानां शक्तिरित्येतन्मतेऽपि व्यक्तिज्ञानजननसमर्थस्य पदस्य जाताविव व्यक्तावपि वाच्यत्वं दुरपन्हवमेव। शक्तिनिरूपकज्ञानविषयत्वरूपस्य तस्याविशेषेण जातिव्यक्त्योः सत्त्वादिति चेत्?

## मीमांसकमतेन परिहारः (कुब्जशक्तिमतम्)

न। व्यक्तिशक्तावस्माकं न वैमत्यम्, अपि तु व्यक्तिशक्तिज्ञानत्वेन शक्तिज्ञानहेतुतायामेव[4]। अत एव व्यक्त्यंशे[5] कुब्जा शक्तिरिति गीयते। तदंशे तज्ज्ञानानपेक्षणात्। अत एव व्यक्तेर्न वाच्यता। न हि शक्तिधीविषयतामात्रेणैव वाच्यता। तादृशविषयताया अन्वयसाधारण्यात्। अपि तु यद्विषयकत्वेन शक्तिज्ञानस्य तद्विषयकशाब्दधीजनकता तत्त्वमेव तद्वाच्यत्वव्यवहारनियामकम्। अन्वयांशे कुब्जशक्तिसत्त्वेऽपि यथा तद्विषयकत्वं शक्तिज्ञानजनकतायां नावच्छेदकं, तथा व्यक्त्यंशे तत्सत्त्वेऽपि तद्विषयकत्वस्य शक्तिज्ञानजनकतायामनवच्छेदकत्वान्न व्यक्तौ तद्व्यवहारः। तद्विषयकत्वस्य शाब्दधीविशेषणत्वात् गवादिपदशक्तिज्ञानस्य गोत्वादिज्ञानविषयकत्वेन गोत्वादिशाब्दधीहेतुत्वेऽपि न गवादिपदस्य गोत्वादिज्ञानवाचकताऽऽपत्तिः।

वस्तुतो यद्विषयकत्वविशिष्टज्ञानविषयकत्वेन शक्तिज्ञानस्य शाब्दधीजनकता, यद्विषयकत्वेन वा शाब्दधियः शक्तिज्ञानजन्यता, तत्त्वमेव तथा।

---

[1] का. भ्रमा ज.
[2] का 1. सत्त्वे ज. मानसत्त्वेन का2.
[3] ज. का 1. तदुपन्यासस्यापि का 2. मं.
[4] ज. का 1. हेतुतायामेव का 2.
[5] व्यक्तेर्न मं.

एतेन "ज्ञानत्वज्ञानस्यापि ज्ञानपदवाच्यताऽऽपत्तिः, शक्यज्ञानविषयकत्वे[1]नैव ज्ञानपदशक्तिज्ञानस्य ज्ञानत्वेन[2] ज्ञानत्वज्ञानविषयकशाब्दधीजनकत्वात्" इति परास्तम्।

कारणत्वस्य कार्यत्वस्य चावच्छेदकगर्भे गोत्वादिविषयकत्वस्य निवेशात् गोत्वादेर्वाच्यत्वोपपत्तिः। एवं च गौर्गोपदशक्येत्याकारिकाऽपि शाब्दबोधोपयोगिशक्तिधीः सम्भवति। गवांशे[3] शक्तेरबाधेनान्यथाख्यात्यापत्तिविरहात्। तादृशज्ञानस्य शाब्दधीहेतुत्वेऽपि गोत्वधर्मिताऽवच्छेदककशक्तिज्ञानत्वेन व्यक्तिविषयतामनन्तर्भाव्यैव गोत्वप्रकारकशाब्दबुद्धौ तस्य तथात्वात् उक्तरीत्या व्यक्तेरवाच्यतोपपत्तिः।

**कथं व्यक्तौ कुब्जा शक्तिरिति आक्षेपस्य परिहारः**

न चैवं व्यक्त्यंशे[4] शक्तिज्ञानस्यापेक्षिततया तदंशे शक्तेः कुब्जत्वानुपपत्तिरिति वाच्यम्। कार्यकारणभावावच्छेदककोटौ व्यक्त्यनन्तर्भावस्यैव तदंशे कुब्जत्वव्यवहारनिर्वाहकत्वात्। अतः[5] सामान्यलक्षणापूर्वपक्षे मणिकृतां[6] समानप्रकारकत्वेन शक्तिधीशाब्दधियोर्हेतुहेतुमद्भावाभिधानमपि[7] न विरुध्यते।

न च शक्त्यंशे गोत्वादिप्रकारकज्ञानस्य गवांशे गोत्वप्रकारक शाब्दबोधहेतुत्वेऽपि कार्यकारण[8]योः समानप्रकारकत्वस्याक्षतत्वात् न तद्विरोध[9] इति वाच्यम्। शक्त्यंशे गोत्वादिप्रकारतामादाय समानप्रकारकत्वस्याभिप्रेतत्वे "अपूर्वे

---

[1] विषयत्वे मं.

[2] ज.का 2. नास्ति का 1.

[3] ज.व्यक्त्यंशे का.

[4] का. शक्त्यंशे इति ज स्खलितम्।

[5] ज. अत एव का.

[6] कृता ज.

[7] व्याप्त्यनुभव-तत्स्मरण-पक्षधर्मताज्ञानानामेकप्रकारकत्वेनानुमितिहेतुत्वात् त.चिं.म.पृ.2.1.273-4.

[8] भाव अ.मं.



[9] ज. अनुभवविरोधः का.

वक्ष्यते"[1] इत्यस्यासङ्गत्यापत्तेः, अपूर्ववादे समानप्रकारकात् लिङ्गदजन्यात्[2] कार्यत्वेन घटादिरूपकार्ये शक्तिज्ञानात् कार्यत्वेनापूर्वविषयकशाब्दबोध इत्येवाभिधानात्[3]। शक्त्यंशे शाब्दबोधप्रकारप्रकारकज्ञानस्य हेतुतायास्तत्रानुक्तेः। न चैवं "जात्यंशे सा ज्ञाता, व्यक्त्यंशे स्वरूपसती हेतुर्लाघवादिति कुब्जशक्तिवादः"[4] इत्यादिचिन्तामणिग्रन्थविरोध इति वाच्यम्। मतभेदेनोभयग्रन्थसङ्गतेः।

वस्तुतस्तु जातिधर्मिताऽवच्छेदककशक्तिज्ञानस्य हेतुत्वे व्यक्तेर्विषयताऽपि कारणताऽवच्छेदककोटौ निविशते। विशेष्यताऽवच्छेदकतात्वेनैव[5] धर्मिताऽवच्छेदकीयविषयताविशेषस्य निवेशनीयत्वात्। अवच्छेदकतानिरूपकविशेष्यताया व्यक्तिविषयतारूपत्वात्। एवं च व्यक्तेरवाच्यताव्यवहारस्य कथञ्चिदुपपादनेऽपि शक्त्यंशे जातिप्रकारकज्ञानहेतुतापेक्षया[6] गौरवं दुर्वारमेव। कारणताऽवच्छेदके अधिकविषयतानिवेशात्।

एवं द्रव्यत्वादिधर्मितावच्छेदककप्रमाऽऽत्मकगवादिपदशक्तिज्ञानात् द्रव्यत्वादिप्रकारकशाब्दबोधवारणाय शक्त्यंशे धर्मिताऽवच्छेदकावच्छिन्नत्वावगाहित्व स्याप्यधिकस्य निवेश्यतया गौरवमिति व्यक्तौ कुब्जशक्तिवादिनामपि शक्त्यंशे जातिप्रकारकज्ञानहेतुतामतमेव साधीयः।

वस्तुतस्तु सर्वलाक्षणिकस्थलेऽप्यन्वयबोधस्यानुभविकत्वेन दुरपन्हवतया लाक्षणिकस्यानुभावकत्वं दुर्वारमेवेति तस्य लक्ष्यार्थे कुब्जशक्तिप्रसङ्ग इति न अनुभवजननसामर्थ्यम् ईश्वरसंकेतो वा वृत्तिरूपा शक्तिः; अपि तु पदार्थान्तरमेव, सा च जातावेव कल्प्यते, न तु व्यक्त्यादाविति न तत्र कुब्जशक्तिरपीति तत्त्वम्।

---

[1] त.चिं.म.पृ.2.1.274.

[2] ज. लिङ्गदस्य का.

[3] नन्वपूर्वे व्युत्पत्तिविरहः।........मैवं। कार्ये धर्मिणि कार्यत्वेन शक्तिग्रहात् कार्यत्वविशिष्टं चोपस्थितमेव। ततोन्विताभिधानदशायां यागविषयकं कार्यमित्यनुभवः स्वर्गकामान्वयायोग्यतया घटादिकं तिरस्कृत्य क्रियाभिन्ने योग्यतावशात् यागविषयकापूर्वे पर्यवस्यति, न तु अपूर्वत्वेन शक्तिग्रहः। त.चिं.म.पृ.4.2.343-4.

[4] त.चिं.म.पृ.4.2.567.

[5] ज.का 1. च्छेदकत्वेनैव का 2.



[6] ज. हेतुतामतापेक्षया का.

## पदावाच्यस्य व्यक्तिरूपस्यार्थस्य शाब्दबोधे कथं भानम्? इत्याक्षेपः

अथ व्यक्तेर्गवादिपदावाच्यत्वे[1] गवादिपदाद्व्यक्तेः स्मरणमनुभवो वा[2] न स्यात्। न च पदावाच्यत्वेऽप्यन्वयस्येव व्यक्तेर्भानं शाब्दबोधे[3] नानुपपन्नमिति वाच्यम्। तद्धर्मप्रकारकशाब्दबोधे तद्धर्मप्रकारकपदार्थोपस्थितेर्हेतुतया गोत्वप्रकारकबुद्धौ गोत्वादिप्रकारकव्यक्तिस्मरणस्यापेक्षणीयतया, सम्बन्धग्रहाविषयतया व्यक्तेरस्मरणे व्यक्तेः शाब्दानुभवविषयताया दुरुपपादत्वात्, अन्वयस्य च संसर्गविधयैव भानाच्छाब्दधियो[4]ऽन्वयांशे निष्प्रकारकतया तदुपस्थित्यनपेक्षणेन तत्र वाच्यत्वानुपयोगादिति चेत्

## व्यक्तिः आक्षिप्यत इति भाट्टमतेन समाधानम्

अत्र भट्टाः– पदान्न व्यक्तेः स्मरणम् अनुभवो वा; किं त्वाक्षेपादेव व्यक्तिधीः। आक्षेपिका च जातिरेव। आक्षेपश्चानुमानमर्थापत्तिर्वा। न च जातिव्यक्त्योर्वैयधिकरण्येनाक्षेपासम्भवः[5], तादात्म्यसम्बन्धेन जातेराधेयतासम्बन्धेन व्यक्त्याक्षेपकतायामविरोधात्।

वस्तुतस्तु गामानय इत्यादौ स्वाश्रयवृत्तित्वादिरूप परम्परासम्बन्धेनानयनकर्मत्वादौ गोत्वादिजातेरन्वयः शाब्दः[6]। तेन सम्बन्धेन गोत्वादिमत्त्वस्य चाधेयतासम्बन्धेन गवादिव्याप्यत्ववत्[7], आधेयतासम्बन्धेन[8] गवादिमत्त्वं विना[9] अनुपपद्यमानत्वाच्चानयनकर्मत्वादावा[10]धेयतासम्बन्धेन

---

[1] वाच्यत्वे का2.

[2] च मं.

[3] का. शाब्दत्वाच्च ज.

[4] अन्वयस्य च भाने शाब्दधियो मं.

[5] करण्यसंभवः मं.

[6] का . नास्ति ज.

[7] गवादिव्याप्यत्वात् मं.

[8] का 1. नास्ति ज. गवादिव्याप्यत्ववत्, आधेयतासम्बन्धेन ना.का2.

[9] ज.का 1. गवादिमत्त्वविरहे का 2.



[10] कर्मत्वादेरा मं.

गवादिव्यक्तिप्रकारिका धीराक्षेपात्। संसर्ग[1]घटकतया शाब्दबोधे व्यक्तिभानेऽपि कर्मत्वांशे गोत्वाद्यवच्छिन्नव्यक्तेः प्रकारतया भानानुरोधेन[2] आक्षेपादरः। "गोत्वं गवाश्रितं, गोनिष्ठभेदप्रतियोगिताऽनवच्छेदकधर्मत्वात्" "किंचिदाश्रितं वा जातित्वात्" इत्यनुमानतो व्यक्तिभानं तु न सार्वत्रिकं, तादृशहेतूपस्थितेरसार्वत्रिकत्वात्, गवादिपदात्तादृशरूपेण गोत्वादेरनुपस्थितेः।

### व्यक्तिमन्तरा जातिमात्रस्य स्मरणोपपादनम्

अथ गवादिपदात् व्यक्तेरस्मरणे गोत्वादिस्मरणमेव कथमुपपद्यते? गोत्वप्रकारकस्मरणे व्यक्तेर्विशेष्यतया भाननियमात्। तद्विशेष्यकस्मरणे च व्यक्तिघटितगोत्वत्वादेः प्रकारतया भान[3]नियमात्। व्यक्त्यघटितप्रकारस्य[4] संभवेऽपि स्वरूपत एव जातेः शक्यतया धर्मान्तरविशेष्यतया तत्स्मरणासम्भवात्। धर्मान्तरप्रकारेण स्मरणेऽपि गोत्वाद्यंशे निष्प्रकारकशाब्दज्ञानासम्भवेन तादृशस्मृतेरुपयोगित्वाभावाच्चेति[5] चेत्– न। पदादालोचनरूपस्यैव स्मरणस्योपगमात् किंचिद्धर्मावच्छिन्नसम्बन्ध्युपरक्तसम्बन्धज्ञानाधीन तत्सम्बन्धिस्मृतेः सप्रकारकत्वनियमेऽपि निर्विशेषणकसम्बन्ध्युपरक्त सम्बन्धज्ञानान्निर्विकल्पकस्मरणे बाधकाभावात्। निर्विकल्पकस्य संस्काराजनकत्वेऽपि विशिष्टज्ञानाहितविशिष्टगोचरसंस्काराद्विशेष्यांशानुद्बोधदशायां केवलविशेषणांशस्मरणे न विरोध इति वदन्ति।

## भाट्टमतस्य खण्डनेन व्यक्तौ शक्त्युपपादनम्

तदसत्। गवादिपदात् स्वरूपतो गोत्वादिज्ञानेऽपि व्याप्यताऽवच्छेदकप्रकारेण तद्ग्रहासम्भवात्, ततो व्यक्त्याक्षेपासम्भवात्। न च शाब्दधीविषयेण परम्परासम्बन्धेन गोत्वादिविशेषितकर्मत्वादिहेतुनाऽऽनयनादौ

---

[1] ज. पूर्वं संसर्ग का 2. पूर्वसंयोग का 1.

[2] ज. गोत्वाद्यवच्छिन्नव्यक्तिप्रकारकभानानुरोधेन का1.

[3] का. नास्ति ज.

[4] ज. स्मरणस्य-इत्यधिकं का 1.



[5] ज.का 2. उपयोगित्वाभावाच्चेति का 1. अनुपयोगित्वाच्चेति का2.

गवादिकर्मकत्वमनुमेयमिति वाच्यम्। विशिष्टसाध्यस्य प्रागप्रतीतेः। एवं "गौरानीयताम्" इत्यादौ स्वरूपत उपस्थितस्य गोत्वादेरेव विशेष्यतया भानोपगमे निर्धर्मिताऽवच्छेदककशाब्दधीस्वीकारापत्तिः।[1]

[2]एवं गवादावानयनकर्मत्वं सामानाधिकरण्यसम्बन्धेनानयन कर्मत्वविशेषितेन गोत्वादिहेतुनाऽनुमेयम्। तच्च न सम्भवति। तादृशगोत्वादेरानयनकर्मत्वादिशून्यगवादिसाधारण्येन व्यभिचारात्। सामानाधिकरण्यसम्बन्धेनानयनकर्मत्वादिविशिष्टस्य विशेषणाव्यभिचारित्वेऽपि साध्यस्य पक्षे सन्देहदशायां साध्यविशिष्टस्य हेतोः[3] पक्षे दुर्निश्चयत्वात्। अतो व्यक्तेः शाब्दबोधे विशेष्यादिविधया भानमावश्यकमित्यपि बोध्यम्।

## व्यक्तिबोधे श्रीकरमतं, तन्निरासश्च

एतेन जातिवाचकपदाज्जातिबोधः शाब्दो, व्यक्तिबोधस्त्वौपादानिक एवेति **श्रीकरमत**मनुपादेयम्। उपादानस्यार्थापत्तिरूपत्वेन भट्टमताविशेषात्। न च जातिरेव व्यक्तिबोधिका; जातिकरणकत्वमेवौपादानिकत्वं बोधस्येति वाच्यम्। जातेः प्रमाणान्तरताकल्पनापेक्षया व्यक्तिशक्तिकल्पनाया एवोचितत्वात्। एवं जातेर्नित्यतया सर्वदैव तद्धेतुकव्यक्तिधीवारणाय जातिहेतुकव्यक्तिबोधे जातिशक्तिज्ञानघटिततच्छाब्दसामग्र्याः सहकारित्वमवश्यमभ्युपगन्तव्यम्;[4] तथा च तादृशसामग्र्या एव व्यक्तिभानप्रयोजकत्वसम्भवेन[5] जातेः करणत्व[6]कल्पनमनर्थकम्। न च जातिनिरपेक्षजातिभासकसामग्र्या व्यक्तिभानप्रयोजकत्वे व्यक्त्यंशेऽपि शाब्दत्वमावश्यकम्। तथा सति च

---

[1] ज.का2. तादृशबुद्धेराक्षेपकताऽवच्छेदकावच्छिन्नाविषयतया व्यक्त्याक्षेपकताऽनुपयोगिताऽऽपत्तिश्चेति व्यक्तेः शाब्दबोधे विशेष्यादिविधया भानमावश्यकमित्यवधेयम् इत्यधिकं का 1.मं.

[2] अयं वाक्यसमूहो नास्ति मं.

[3] ज.का 1. साध्यहेत्वोः का 2.

[4] ज. का1, इति इत्यधिकं का 2.

[5] का. अपि इत्यधिकं ज.



[6] प्रमाणान्तरत्वं मं.

शक्ति[1]ज्ञानजन्यव्यक्तिस्मृतेरप्यपेक्षा स्यात्[2]। जातेः करणत्वे च व्यक्त्यंशे औपादानिकत्वमेव, न तु शाब्दत्वमिति न तदपेक्षेति वाच्यम्। व्यक्तिभानांशे जातेः करणत्वे तदंशेऽशाब्दत्वोपगमसम्भवे, तदकरणत्वेऽपि तत्सम्भवात्। जातेरकरणत्वे व्यक्त्यंशे कीदृशकरणस्य जन्यताऽवच्छेदकधर्मवत्त्वमिति चेत्? न कस्यचित्[3], तावता क्षतिविरहात्।

## व्यक्तिबोधे मण्डनमिश्रमतोपन्यासः

व्यक्तेरपि बोधः शब्दादेव, न त्वाक्षेपादितः। व्यक्त्यंशे करणान्तरापेक्षायां[4] व्यक्तिशाब्दबोधे शक्तिविरहो नानुपपत्तिं प्रयोजयति। लक्षणात एव तदुपपत्तेरिति **मण्डनाचार्यमतम्**। तदुक्तम्–

जातेरस्तित्वनास्तित्वे न हि कश्चिद्विवक्षति।
नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे।। इति।

अस्तित्वनास्तित्वे= उत्पादविनाशौ। लक्षणा च जातिप्रकारेणैव व्यक्तिं बोधयति, न तु व्यक्तित्वादिनेति नानुभवविरोधः। नीलादिपदस्य शक्यनीलादिगुणपुरस्कारेण लक्षणया बोधकत्ववच्छक्यजातिपुरस्कारेण लक्षणया गवादिपदस्य व्यक्तिबोधकत्वेऽविरोधात्।

"स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा"

इत्यत्र स्वार्थपदस्य शक्यताऽवच्छेदकपरत्वात्।

अत्रेदं चिन्त्यम्। गवादिपदाल्लक्षणया गोत्वप्रकारकबोधोपगमे जातिशक्तिरन्वयबोधे नापेक्ष्येत[5]। लक्ष्यताऽवच्छेदकताया एव जातिभाने प्रयोजकत्वसम्भवात्। न च शक्तिं विना शक्यसम्बन्धरूपलक्षणैव न निर्वहतीति शक्तेरुपयोगितेति वाच्यम्। लक्षणानिर्वाहार्थं जातिशक्तिकल्पने गवादिपदस्य द्रव्यत्वादावपि विनिगमनाविरहेण शक्तिकल्पनप्रसङ्गात्। द्रव्यत्वादिसम्बन्धेनापि

---

[1] वृत्ति का2.

[2] का. स्मृतिरपेक्षिता ज. स्मृतिरपेक्षते मं.

[3] ज. कस्यापि का. मं.

[4] ज. पदद्वयं नास्ति का. मं.



[5] नापेक्ष्यते मं.

गवादौ लक्षणासम्भवात्। प्रयोगविरहस्य द्रव्यत्वादाविव स्वातन्त्र्येण गोत्वादावप्यविशिष्टत्वात्। लक्षणाघटकतया शक्तेरुपयोगितायां तस्या वृत्तित्वानुपपत्तेः, स्वातन्त्र्येणातथात्वात्।

## न्यायमतोपसंहारः

### आक्षेपः

अथाकृतिविशिष्टायामेव व्यक्तौ लक्षणा। आकृतिप्रकारेण व्यक्तिबोधस्य नैयायिकानामप्यनुमतत्वात्। तत्र शक्त्युपस्थापितजातेरन्वय उपगम्यते। न चाकृतावेव शक्तिः, जातिविशिष्टे लक्षणेति वैपरीत्यमेव किं न स्यादिति वाच्यम्। आकृतेरवयवसंयोगरूपाया आनन्त्यात्तदपेक्षया एकस्यां जातावेव[1] शक्तिकल्पनौचित्यात्। न चावयवसंयोगनिष्ठजातिरेव शक्या, व्यक्तौ तदन्वयश्च स्वाश्रयघटितपरम्परासम्बन्धेन स्वीक्रियतामिति वाच्यम्। आकृतिप्रकारकबोधस्यानुभविकत्वात्। लक्ष्यार्थव्यक्त्यनुपरक्तायां[2] केवलजातौ प्रयोगविरहश्च न शक्त्यभावसाधकः, अप्रयोजकत्वादिति, तत्र प्रयोगमात्रविरहस्यैव[3] तदशक्यत्वे बीजत्वात्, जातावप्रयोगस्यासिद्धत्वात्, तात्पर्यसत्त्वे च वृत्तिद्वयाधीनबोधोपगमे क्षतिविरहः।

न चैवं केवलमुख्यार्थतात्पर्येण "गवि नित्यत्वम्" इति स्वारसिकप्रयोगापत्तिरिति वाच्यम्। शक्त्या स्वरूपत उपस्थिताया जातेः समानपदोपात्तधर्मिण्याश्रयतासम्बन्धेनान्वयस्यैव[4] व्युत्पन्नत्वात्।

न चान्वयिताऽवच्छेदकरूपेणानुपस्थिताया जातेरन्वयो विरुध्यते। व्युत्पत्तिवैचित्र्येण प्रकारतया स्वरूपत उपस्थिताया जातेरन्वयस्वीकारे क्षतिविरहादिति रीत्या चेन्मतमेतत्परिष्क्रियते,

---

[1] का 1. लघीयस्यां जातावेव का 2. मं. एकस्या जातेरेव ज.

[2] ज. का 2. लक्ष्यार्थानुपरक्ताया का 1. लक्ष्यार्थानुपरक्तायां मं.

[3] ज. तत्राप्रयोगस्यैव का 2. प्रयोगमात्रविरहस्यैव का 1.



[4] का 1.मं. अन्वयस्य ज. धर्मिण्येवाश्रयतासंबन्धेन अन्वयस्य का 2.

**समाधानम्**

तथाऽपि स्वरूपतो गोत्वाद्यन्वयबोधस्य लक्ष्यार्थे गवादौ स्वीकारे तादृशान्वयबोधं प्रति योग्यताज्ञानादीनां कारणताकल्पनाऽऽधिक्यात्, गोत्वादिविशिष्टव्यक्तिशाब्दधीसामग्रीप्रतिबन्धकतायां जातिव्यक्तिविषयकोपस्थितिद्वयस्य निवेशनीयतया प्रतिबन्धकताऽवच्छेदक शरीरगौरवाच्च जात्याकृतिविशिष्टव्यक्तिशक्तिपक्ष एव साधीयान्।

## प्राभाकरमतानुवादः

प्राभाकरास्तु – जातिशक्तिज्ञानादेव जातिप्रकारेण व्यक्तेः स्मरणं शाब्दबोधश्च; न तु निर्विकल्पकरूपं जातिस्मरणम्। निर्विकल्पकानभ्युपगमात्। "व्यक्तिसम्बन्धज्ञानविरहेण तदंशानुद्बोधात् व्यक्तिस्मरणासंभवः" इति तु नाशङ्कनीयम्। व्यक्तिमविषयीकृत्य स्वरूपतो गोत्वादिज्ञानासंभवेन गोत्वाद्युद्बोधकस्यैव व्यक्त्युद्बोधकत्वात्, तदुद्बोधकस्य फलबलकल्प्यत्वात्। सम्बन्धिताऽवच्छेदकहस्तित्वादिसम्बन्धाग्रहेऽपि हस्त्यादिसम्बन्धिहस्तिपकादिज्ञानात्मकोद्बोधकबलात् हस्त्यादिस्मरणे हस्तित्वादेः प्रकारतया भानवत्, व्यक्तिसम्बन्धज्ञानमन्तरेणापि जातिसम्बन्धिपदज्ञानात् जातेः स्मरणे व्यक्तेर्विशेष्यतया भाने विरोधविरहात्। तद्धर्मप्रकारकस्मृतौ तद्धर्मावच्छिन्नसम्बन्धितया गृहीतवस्तुज्ञानस्य हेतुतायामदृष्टरूपोद्बोधकजनितस्मृतौ व्यभिचारवारणाय कार्यताऽवच्छेदकसंकोचस्यावश्यकतया, तत एव प्रकृतव्यभिचारानवकाशात्। जातिशक्तिज्ञाने नियमतो जातिप्रकारेण व्यक्त्यभानात्, तज्जन्यसंस्कारात् नियमतो व्यक्तिस्मरणासम्भव इति चेत्– का क्षतिः? व्यक्तिविषयकज्ञानान्तरस्यावश्यकतया तज्जन्यसंस्कारादेव व्यक्तिस्मरणसम्भवात्।

अथ भवतु जातिशक्तपदज्ञानाज्जातिप्रकारेण व्यक्तिस्मरणं, तथाऽपि तत्प्रकारकशाब्दबोधो न संभवति, तद्धर्मप्रकारकधर्मिविषयकशाब्दबोधे तद्धर्मप्रकारेण धर्मिगृहीतवृत्तिकपदज्ञानजन्यतद्धर्मप्रकारकव्यक्त्युपस्थितेर्हेतुत्वात्। पदे गृहीतवृत्तिकत्वमात्रनिवेशे घटत्वादिगृहीतवृत्तिकपदे[1] गोत्वाद्यवच्छिन्ननिरूपित



[1] पदात् मं.

सम्बन्धान्तरावगाहि-ज्ञानजन्यगोत्वादिप्रकारकस्मरणात् गोत्वादिप्रकारक शाब्दबोधापत्तिः। तद्धर्मगृहीतवृत्तिकत्वनिवेशे पशुत्वादिप्रकारेण धर्मिगृहीत-धर्मागृहीतशक्तिकपश्वादिपदात् पशुत्वादिप्रकारकशाब्दबोधस्य गुरूणामप्यनुमतस्यानुपपत्तिः।

न च प्रकारीभूतधर्मभेदेन कार्यकारणभावभेदस्य यत्त्वतत्त्वाननुगमेनावश्यकत्वात् जातिप्रकारकशाब्दबोधे एव[1] जातिरूपधर्ममात्र गृहीतवृत्तिक[2]पदज्ञानजन्यस्मरणस्य[3] हेतुत्वमङ्गीकार्यम्, [4]उपाधिविशिष्टविषयक शाब्दबोधे तु विशिष्टगृहीतवृत्तिकपदज्ञानजन्यस्मृतेरेव इति वाच्यम्। एवमपि जातिमल्लाक्षणिकपदज्ञानात्[5] जातिप्रकारकशाब्दबोधानुपपत्तेर्जागरूकत्वात्। लक्षणाज्ञानाधीनपदार्थोपस्थितेर्हेतुत्वान्तरकल्पने च गौरवात्।

न च तन्मतेऽध्याहृतार्थस्यान्वयबोधविषयतया पदजन्यपदार्थोपस्थितित्वेन हेतुत्वमेव नास्ति; कथमुक्तानुपपत्त्यवसर इति वाच्यम्। सर्वपदार्थाध्याहृत[6]स्थलेऽन्वयबोधवारणाय तन्मतेऽपि तादृशहेतुताया व्यवस्थापितत्वात्।

न च तथाऽपि पदज्ञानजन्यपदार्थोपस्थितित्वघटितकारणताऽवच्छेदकेन जातिमद्व्यक्तिलाक्षणिकपदजन्य-व्यक्त्युपस्थितेरसंग्रहो न दोषाय; अध्याहृतपदार्थोपस्थितेर्येन रूपेण हेतुता व्यवस्थापिता, लक्ष्यार्थोपस्थितेरपि तद्रूपाक्रान्ततयैवोपपत्तेः, शक्तपदस्यैवानुभावकतेति सिद्धान्तात्, सर्वलाक्षणिकस्थले अन्वयबोधानुपगमात्, तत्स्थलीयसामग्रीबलात् सर्वाध्याहारस्थलेऽप्यन्वयबोधापत्ति[7]रिति शङ्काऽनवकाशादिति वाच्यम्।

---

[1] का. नास्ति ज.

[2] का. जातिगृहीतवृत्तिक ज.

[3] एव अ. ज.

[4] ज.का 2. इदं वाक्यं नास्ति, अङ्गीकार्यमिति वाच्यम् इत्यत्रैव समाप्तं वाक्यम् का 1.

[5] ना.मं.

[6] ज.का 1. सर्वार्थाध्याहार का 2.



[7] का. उपपत्ति ज.

यत्र लाक्षणिकपश्वादिपदात् गोत्वादिप्रकारिकोपस्थितिः, तदव्यवहितोत्तरद्वितीयाऽऽदिविभक्तितः शक्त्या कर्मत्वाद्युपस्थितिः, ततश्च कर्मत्वादिविशेष्यको गोत्वाद्यवच्छिन्नप्रकारकः शाब्दबोधः; तत्स्थलीयसामग्री, लक्षणाऽधीनपदार्थोपस्थितेरध्याहारात्मकोपस्थितिसाधारणरूपमात्रेण हेतुतामते कर्मत्वाद्युपस्थापकविभक्ति-प्रकृतिभूतपश्वादिपदाद्यत्र न गोत्वाद्यवच्छिन्नोपस्थितिः, अपि तु निराकाङ्क्षपदान्तरादनुमानादितो वा[1], तत्राप्यक्षतैवेति तादृशबोधस्य तत्रापत्तेर्दुर्वारत्वात्। अर्थाध्याहारमतेऽपि यत्र साकाङ्क्षपदात् न प्रकृतवाक्यार्थघटकस्य कस्याप्यर्थस्योपस्थितिः, तत्र शाब्दबोधोत्पत्तेरनिष्टत्वादिति चेत्–

न। शक्तिलक्षणासाधारणस्यानतिप्रसक्तवृत्तित्वस्य दुर्वचतया शक्तित्व-शक्यसम्बन्धत्वाभ्यामेव तयोर्निवेशनीयतया शक्तिलक्षणाऽधीनपदार्थोपस्थित्योः कारणताभेदस्य व्यक्तिशक्तिवादिनामप्यावश्यकतया शक्त्यधीनपदार्थोपस्थितेः तद्धर्मगृहीतशक्तिकपदज्ञानजन्यतद्धर्मप्रकारकोपस्थितित्वेनैव तद्धर्मप्रकारकशाब्दबोध-हेतुतायाः कल्पयितुमुचितत्वात्।

न च तद्धर्मावच्छिन्नविषयतानिरूपितशक्तिविषयता[2]शालिज्ञानत्वेन[3] व्यक्तौ शक्तिलक्षणाग्रहयोर्व्यक्तिशक्तिवादिमतेऽनुगमः सम्भवति, "गोसम्बन्धिशक्तं पदम्" इत्याकारके "पदशक्य[4]सम्बन्धिनी गौः" इत्याकारके वा लक्षणाग्रहेऽपि गोत्वाद्यवच्छिन्नविषयतया समं परम्परया शक्तिविषयताया निरूप्यनिरूपक भावसत्त्वादिति वाच्यम्। साक्षान्निरूपितत्व-परम्परानिरूपितत्वयो रनुगमकरूपाभावात्।

यत्तु – वृत्तिसंसर्गकपदप्रकारकज्ञानमेव शाब्दबोधोपयोगि। एवं च शक्तिसंसर्गता-निरूपकपदप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिज्ञानत्वेन तद्धर्मावच्छिन्नविशेष्यकशाक्तिलक्षणा-ज्ञानयोरनुगमः सम्भवत्येव; शक्यसम्बन्धेन

---

[1] का. अपि ज.

[2] ज.का 1. निरूपितविषयता इत्यधिकं का 2.

[3] ज्ञानत्वे मं.

[4] पदशक्त्य का2.

अर्थांशे पदप्रकारक[1]ग्रहस्यापि[2] तथात्वात्, संसर्गताऽवच्छेदकीयविषयितायामपि संसर्गतात्वसत्त्वादिति।

तदसत्। शक्तिकालीनत्वादिसम्बन्धावगाहिज्ञानवारणाय पदप्रकारत्व-अर्थविशेष्यत्वोभयनिरूपित-शक्तिनिष्ठसांसर्गिकविषयतानिवेशस्यावश्यकतया शक्ति संसर्गकज्ञानसंग्राहकेण रूपेण लक्षणाग्रहासंग्रहात्।

अथ धर्मशक्तपदस्य धर्मिस्मरणशाब्दबोधजनकत्वे लोमाद्यात्मकोपाध्यवच्छिन्नबोधकपश्वादिपदस्यापि धर्मिशक्तिर्विलीयतां, युक्तेः साम्यात्। न च निर्विकल्पकरूपस्य स्मरणस्य शाब्दबोधस्य चानभ्युपगमात् जातिवाचकपदाद्व्यक्त्यविषयकस्मरणाद्यसम्भवेन तस्य व्यक्तिस्मरणादिजनकत्वम्, धर्म्यविषयकस्यापि च लोमत्वाद्यवच्छिन्नविषयकस्य स्मरणादेः सम्भवात् पश्वादिपदस्य लोमत्वाद्यवच्छिन्नवाचकत्वोपगमे न धर्मिधीः सम्भवतीति तस्य धर्मिवाचकतेति वाच्यम्। उपाधेर्धर्मिविनिर्मोकेण भानसम्भवरूपस्य जात्यपेक्षया विशेषस्य सत्त्वेऽपि जातिशक्तपदज्ञानस्य जातिप्रकारिकायामिव[3], उपाधिशक्तपदज्ञानस्याप्युपाधिप्रकारकधर्मिविषयकबुद्धौ कारणताकल्पने बाधकाभावात्, उपाधिमात्रशक्तादपि धर्मिधीसम्भवादिति चेत्?

न। लोमत्वाद्यवच्छिन्नसम्बन्धान्तरवत्तया गृहीतात् पश्वादिपदाल्लोमत्वादिना लोमादिमुख्यविशेष्यकस्यैव स्मरणस्य धर्मिस्मरणोद्बोधकान्तर[4]विरहदशायामुत्पाददर्शनात्[5] तद्रूपावच्छिन्नशक्तत्वेन गृहीतात् पदादपि तद्रूपावच्छिन्नमुख्यविशेष्यकस्मरणोत्पादस्यानुभाविकत्वात्, ततस्तद्धर्मावच्छिन्नप्रकारकधर्मिस्मरणस्य नियमतः स्वीकारासम्भवात्। लोमादिमात्रशक्तत्वेन गृहीतपदान्नियमतस्तत्प्रकारकशाब्दबोधानिर्वाहात्[6]।

---

[1] पदप्रकार का2.

[2] का.अपि नास्ति ज.

[3] का. एतदव्यवहितपूर्वतत्पदयोः पौर्वापर्यं ज.

[4] ज.का 1.बाधकान्तर का 2.

[5] का 1. उत्पादवत् ज.का 2.

[6] तद्रूपावच्छिन्नशक्तत्वेन गृहीतात् तद्रूपावच्छिन्नप्रकारकधर्मिस्मरणस्य नियमतः स्वीकारे अनुभवविरोधात् मं.

अविशेषितगोत्वादेः सम्बन्धान्तरज्ञानादपि [1]तत्प्रकारकधर्मिस्मरणस्यैवोपगमेन तत्र तादृशशक्तिसम्बन्धज्ञानान्नियमतस्तत्प्रकारकधर्मिस्मरणोपगमेऽनुभवविरोधाभावात् अत्रेष्टापत्तेरपि सुकरत्वेन प्रतिबन्देर्वादिनिवर्त्तकत्वायोगाच्च[2]।

## मीमांसकमतेऽनुपपत्तिप्रदर्शनम्

अथ गवादिपदस्य समवायेन गोत्वादिविशिष्ट[3]वाचकत्वानुपगमे "तज्जन्यबोधे गोत्वादेः समवाय एव संसर्गतया भासते, न तु सम्बन्धान्तरम्" इत्यत्र किं नियामकम्। वाच्यानन्तर्भावस्य समवायसाधारण्येन सम्बन्धान्तराभानप्रयोजकत्वासम्भवात्। न हि जातिर्व्यक्तिं विना न भासत इतिवत् समवायं विनाऽपि न भासत इत्यपि नियमो, येन "जातिशक्तिज्ञानजन्यबोधे समवायभानस्याप्यावश्यकता, न तु सम्बन्धान्तरभानम्[4]" इति स्यात्। तदादिपदात् समवायमविषयीकृत्यापि सम्बन्धान्तरेण गोत्वादिविशिष्टविषयकबोधोदयादिति चेत् -

एवं सति ज्ञानशक्तिरेवादरणीया। तथा च गवादिपदस्य समवायेन गोत्वादिप्रकारकज्ञान एव शक्तेरुपगमात्ततो नाभ्रान्तानां सम्बन्धान्तरेण तत्प्रकारकधीः। तत्सम्बन्धेन तत्प्रकारकज्ञान[5]शक्तिग्रहस्यैव तादृशबोधहेतुत्वादिति [6]वाच्यानन्तर्भावस्य समवायासाधारण्येन[7] सम्बन्धान्तरभानप्रयोजकत्वासम्भवादिति कृतं पल्लवितेन।।

---

[1] धर्मिविषयकबोधेन अ.मं.

[2] का 1. स्मरणोपगमे अनुभवविरोधविरहात्। ज. स्मरणोपगमादेतादृशशक्तिसम्बन्धज्ञानान्नियमतस्तत्प्रकारकधर्मिस्मरणोपगमेऽनुभवविरोधविरहात् का 2.

[3] समवायाविशिष्ट मं.

[4] भानस्य का2.

[5] ज्ञाने मं.

[6] ज.का 1. इत आरभ्य का2. पुस्तके नास्ति।



[7] समवायसाधारण मं.

**इति श्रीमत्समस्तविद्वन्मुकुटन्यायसिद्धान्तवागीशगदाधरभट्टाचार्यविरचितः शक्तिवादः समाप्तः**[1]**।।**

---

[1] का1. इति श्रीमहामहोपाध्यायगदाधरभट्टाचार्यविरचितः शक्तिवादः समाप्तः। का 2. इति श्रीगदाधरभट्टाचार्यविरचितः शक्तिवादः समाप्तः।।

नेत्रस्कन्दशिरोवसुद्विजनृपे संवत्सरे पुस्तकम्
राकापुण्यतिथौ शुभे मधुदिने माघे च मासोत्तमे।
श्रीमद्रामदयालुना कृतिवरेणालेखितं खल्विदं
मीमांसाबहुतर्कशास्त्रविदितं सच्छक्तिवादाभिधम्। रामः। जा।



इति श्रीगदाधरभट्टाचार्यविरचितः शक्तिवादः समाप्तः संवत् 1940 मं.